श्रीगणेशदत्तगुरुभ्यो नमः।

## श्री.प.प. वासुदोवानंदसरस्वतीस्वामिविरचिता

# युवशिक्षा

### गोमांतकप्रांतीयकेरीग्रामनिवासिभिः

## 'गोविंदशास्त्री उपाध्ये'

### इत्येतैर्विरचितया टीकया सहिता।

**श्रीदत्तगुरवे नमः।**

# प्रस्तावना

नानाविधसंपद्विभूषिते विश्वविख्याते अस्मिन् महाराष्ट्रप्रान्ते पावनचरिताः सुप्रथितकीर्तयश्च श्रीरामदासप्रमुखाः महानुभावाः साधुपुरुषाः प्रादुर्भूय, स्वकीयेन निरुपमतेजसा सर्वानपि वशीकुर्वन्तः विशुद्धसात्त्विकाचरणेन उपासनाप्रधानेन आम्नायप्रमाणसिद्धं सनातनं धर्ममार्गमुज्ज्वलीचक्रुरिति नैतदविदितमितिहासविदाम्। यदा यदा लोके वैदिकधर्मप्रद्वेषेण स्वैराचारतया वैषयिकसुखलंपटाः पामरा अधर्माभिभूता धर्मसेतुमुन्मूलयितुमभिप्रवर्तन्ते, तदा तदा भगवदंशभूतास्ते ते महापुरुषा वेदोदितधर्माचरण-सन्मार्गोपदेशादिभिर्लोकान् शिक्षयन्तो यथापूर्वं तमेव धर्मसेतुं द्रढयन्तीत्ययमनादिकालपरंपराप्राप्तो दयानिधेर्भगवतः पापपंकनिमग्नदीनलोकोद्धारणप्रकारः। इममेव च प्रकारमनुरुध्य श्रीदत्तात्रेयांशसमुद्भवाः श्रीमन्तो वासुदेवानन्दसरस्वतीस्वामिचरणा अपि सुप्रसिद्धसामन्तवाटिका(सावंतवाडी)परिसरवर्तिनि निर्मलानदीतीरविराजमाने मानग्रामे (माणगांव) गृहीतजन्मानो लोकविस्मयकारिणा ज्ञानतपोवैराग्याद्यमोघगुणवैभवेन वैदिकधर्मयथार्थतामवबोधयामासुः। जन्मकालश्चैतेषां षट्सप्तत्युपस्कृतसप्तशताधिकसहस्रसंख्यायुतः (१७७६) शकः। परमपवित्रश्रोत्रियविप्रकुलसमुत्पन्ना इमे महानुभावाः यथाविधि तत्तत्संस्कारसंस्कृतगात्रः पूर्वपूर्वाश्रमपरिग्रहक्रमेण सकलानप्याश्रमधर्मान् विना विलोपं परिपाल्य, अन्ते च एषणात्रयपरित्यागपूर्वकं शमादिगुणसंपन्नास्तुरीयाश्रमं परिजगृहुः। पश्चाच्च स्वयं विदितवेद्यतया कृतकृत्यतया च कर्तव्यपराङ्मुखा अपि केवललोकानुग्रहाभिलाषेण शिष्टाचारपरिपालनेच्छया च तीर्थयात्रां संकल्प्य आसेतुहिमाचलं पादचारेणैव तत्तत्पुण्यक्षेत्रावलोकन-देवतासंदर्शनमहानदीपावनतीर्थस्नान-महापुरुष-संगमादिभिः कालमतिवाहयामासुः। अस्मिन्नेव तीर्थयात्राप्रसंगे इमे महानुभावाः सुबहून् ग्रंथान् विरचयामासुः। तेषु च केचित्

महाराष्ट्रभाषानिबद्धाः, केचिच्च संस्कृतभाषानिबद्धाः। एवं कतिचन गद्यरूपाः, अपरे च पद्यरूपाः। केचन देवतास्तुतिपराः, केचन नीराजनोपयोगिनः, अन्ये श्रीदत्तात्रेयचरित्रपराः, इतरे धर्मोपदेशप्रधानाः, इत्येवं सुविपुला ग्रंथसंपत्तिरेतेषाम्। एवंविधग्रंथनिर्माणेन शिष्योपदेश ईश्वराराधनं चेति प्रयोजनद्वयं निष्पादयन्तः, तुरीयाश्रमोचितान् सकलानपि शौचाचारान् यथाविधि परिपालयन्तः, बहिर्मुखावस्थायां श्रीदत्तात्रेयसाकारमूर्तिमुपासमानाः, योगकलेन अंतर्मुखावस्थायां च तदीयनिराकारमूर्तिमुपासमानाः, कदाचिच्च समाधिमास्थाय विगलितदेहाभिमानतया ब्रह्मात्म्यैक्यानुभवेन निरतिशयसुखमास्वादयन्तः, निर्ममयोगीन्द्रपदवीमधिरूढा इमे महापुरुषाः स्वकीये षष्टितमे वयसि श्रीगरुडेश्वरक्षेत्रे उपास्यदेवतायाः श्रीमतो दत्तात्रेयगुरोः सन्निधौ पाञ्चभौतिककलेवरपरित्यागपूर्वकं अव्यभिचरितपरमभक्तिपरवशेन श्रीदत्तगुरुणा अनुगृहीतं शाश्वतिकं परमपदमवापुरित्येतत् एतेषां संक्षेपतो जीवनचरितम्। विस्तरेण च एतदीयं चरितं महाराष्ट्रभाषया मुद्रितमेवास्ति। विशेषतश्चैतेषामत्यंमर्वाचीनकालिकतया परमाद्भुतानामेतच्चरितानां साक्षात्कारिणोऽपि लोका अद्यापि सन्त्येवेति, तादृशलोकमुखेनैव विस्तृतं तदीयचरितं सुखाधिगमम्। अत एव जीवनचरितविस्तरीकरणं प्रकृते परिहरामः।

पूर्वनिर्दिष्ट एतन्महापुरुषप्रणीते ग्रंथराशौ कुमारशिक्षा, युवशिक्षा, वृद्धशिक्षा, चेति शिक्षात्रयं प्रथते। क्रमशः कर्ममार्गप्रवर्तनेन कुमारान्, उपासना(भक्ति)मार्गप्रवर्तनेन च यूनः, ज्ञानमार्गप्रवर्तनेन च वृद्धांश्च शिक्षयतीति अर्थानुसारी नामधेययुतं ग्रंथत्रयमिदम्। तत्र कुमारशिक्षायां 'धर्मं सनातनं मृत्यौ प्राप्तेऽपि न परित्यजेत्। धर्मार्चितो यथा तुष्येदीश्वरो न तथान्यथा' इत्यादिना धर्माचरणस्यावश्यकता, फलाभिसंधिरहितस्य तस्य ईश्वरप्रीतिद्वारा मोक्षोपयोगिता, ईश्वरसद्भावश्चेत्येवमादिपरिकरसहितः कर्ममार्गो विशदं निरूपितः। नित्यनैमित्तिककर्माचरणेन विशुद्धाशयस्य शमदमादिसंपन्नस्य गुरुकृपाबलेन मोक्षलाभो भवतीत्यादिरीत्या ज्ञानमार्गो वृद्धशिक्षायां स्फुटीकृतः। प्रस्तुतायां युवशिक्षायां तु प्राधान्येन उपासनामार्गः, तदुपायतया कर्माचरणावश्यकता च सप्रमाणं प्रसाधिता। अंतःकरणवासनानां परिक्षये हि उपासनायां ज्ञाने वा अधिक्रियन्ते मानवाः। अपरिक्षीणवासनस्य तु

नैवास्त्यधिकारः उपासनायां, नतरां ज्ञाने इत्येषः प्रमाणसिद्धोऽर्थः। अत एव च कर्ममार्गस्य प्राथम्यं वदन्त्यभियुक्ताः। तादृशकर्ममार्गस्य अत्यंतदुर्ज्ञेयतया यथार्थकर्मस्वरूपज्ञानं शास्त्रैकसमधिगम्यमिति मन्यमानो ग्रंथकर्ता अस्यां युवशिक्षायां मीमांसाशास्त्रानुसारेण कर्मस्वरूपं, तदनुष्ठानप्रकारं, तदीयमंगप्रधानभावं, अन्यां च तदीयामितिकर्तव्यतां विशदीचकार। सर्वोऽप्ययं संभारः प्रमाणमन्तरा न सिद्ध्येतीति विज्ञाय प्रथमतः वेदप्रमाणोपन्यासः कृतः। तस्य च प्रामाण्यं अपौरुषेयत्वं विना न संभवतीति प्रसंगादपौरुषेयत्वमपि साधितम्। इत्थं प्रसाधितप्रामाण्यस्य विध्यर्थवादमंत्रादिभेदभिन्नस्य वेदस्य कः कोंऽशः केन केन प्रकारेण कस्मिन् कस्मिन् विषये प्रामाण्यमुपैतीत्ययं विचारो विस्तरेण प्रदर्शितः। प्रसंगाच्च विध्यर्थवादोभयविलक्षणस्य वेदान्तवाक्यजातस्य प्रामाण्यप्रकारोऽपि संगृहीतः। ततः पश्चात् प्रधानमुपासनाविषयं परिगृह्य उपासनास्वरूपं, तदवांतरभेदान्, तत्प्रमाणानि, तत्तदुपासनालभ्यफलविशेषान्, विशिष्टोपासनस्य मुक्तिसाधनतां, तेषु तेषूपासनेष्वधिकारिविशेषं च विस्तरेण निर्दिश्य; प्रसंगेन वामाचारावलंबिनी उपासना भास्करादिसंमतापि तदीयैरेव वचनैर्निराकृता। उक्तविधाया उपासनायाः उपास्यदेवतामूर्तिमत्त्वाद्यभावे कथमप्यसंभवेन मूर्तिपूजाविरोधिनां मतं युक्तिभिर्निरस्य देवतामूर्तिमत्त्वादिकं सम्यग्व्यवस्थापितम्। अन्ते च निर्दिष्टोपासनाप्रकारेण फललाभविषये सन्दिहानानां संदेहापनोदपूर्वकं विस्रंभोत्पत्तये प्रत्यक्षदृष्टं श्रीनारायणस्वामिचरितं उदाहरणत्वेन संगृहीतम्। शतश्लोकान्ते च स्वोपपादितस्य सोदाहरणस्योपासनाप्रकारस्य ध्रुवभाविफलतां संकीर्त्य ग्रंथोऽयमुपसंहृतः इत्ययं ग्रंथपरिचयः।

एवंविधग्रंथनिर्माणकर्तृणां श्री.प.प.वासुदेवानंदसरस्वतीस्वामि-चरणानां अद्भुतोदारमहिमा किमु वर्णनीयः ! सांगवेदस्य, सांख्य-योग-मीमांसा-वेदांतादिशास्त्राणां च परिशीलनं विना को नाम ईदृशानि ग्रंथरत्नानि विरचयितुमिष्टे। तत्रापि एकैकस्य विद्यास्थानस्य परिशीलनमेव एकैकजन्मसाध्यम् , एवं स्थिते युगपदैकस्मिन्नेव जन्मनि सकलवेदवेदांगरहस्यवेत्तृता, सकलशास्त्रतत्त्वमर्मभेत्तृता च महापुरुषादन्यत्र क्व नाम संपद्यताम्। विशिष्य च ललितपद्यरूपेण

दुरवगाहशास्त्रसिद्धांतग्रथनमित्युक्तौ परमपंडितानामपि प्रयाससाध्यो विषयः। श्री.प.प.वासुदेवानंदस्वामिनां तु निसर्गरमणीया कविताशक्तिः पंडितानपि विस्मापयति, मंदमतीनप्यानंदयति। एतैर्महानुभावैर्बाल्ये कति वर्षाणि क्रीडासक्त्या हापितानि, कति वर्षाणि च विद्याध्ययनाय उपयोजितानि, को वा साक्षात् सर्वज्ञकल्पो गुरुवर आसादितः, कथं च योगाभ्यासपाटवमुपार्जितम्, कथं च वर्णाश्रमधर्मा अवैगुण्येन परिपालिताः इत्येवमादीनां विषयाणां परामर्शे क्रियमाणे क्षणमात्रं विस्मयोदधिनिमग्नं जडीभवति मनः।

महापुरुषाणामाचाराः, तेषां विचाराः, तदीयतपोबलम्, तत्संबंधिनी निःस्पृहत्वयुता प्रगल्भतरा वाणी, तेषां च बुद्धिवैभवम्, किं बहुना सर्वमेव महापुरुषीयमितिवृत्तं लोकविलक्षणसमुत्कर्णपरिपूर्णं दृश्यते। युक्तं चैतत्। यतो महापुरुष नाम साक्षाद्भगवतो विभूतिरूपाः। भगवद्विभूतिरेव पामरलोकामुग्रहाय भूलोकेऽवतीर्य साधुपुरुषरूपेण संचरन्ती अपारया करुणया दीनजनानुद्धरति। उक्तं च भागवते देवकृतश्रीवासुदेवस्तुतिप्रसंगे- 'बिभर्षि रूपाण्यवबोध आत्मन् क्षेमाय लोकस्य चराचरस्य। सत्त्वोपपन्नानि सुखावहानि सतामभद्राणि मुहुः खलानाम्' इति। ईदृशानां अचिंत्यसामर्थ्यसंपन्नानां अनाकलनीयमहिमशालिनाम् गुणगणो मादृशेन जनेन कथं नाम वर्णनीयः? आस्ताम्।

प्रकृतो युवशिक्षाग्रंथः मीमांसावेदांतादिदर्शनप्रतिपादितानां प्रमेयाणां संक्षेपेण स्वरूपमुपदर्शयन् परमार्थावाप्तिमार्गोपदेशेन जिज्ञासुजनान् नूनमेवोपकरोतीति सर्वथा उपादेय एव। शास्त्रोपदर्शितसरणिक्रमणनिपुणानां प्रगल्भमतीनां पुरुषाणां शास्त्रादेव सिद्धांतज्ञानसंभवेऽपि, सुकुमारमतीनामनायासेन शास्त्रतत्त्वार्थावबोधनाय ईदृशग्रंथावश्यकता अपरिहार्यैव। इमभिप्रायं ग्रंथकृदेव कुमारशिक्षायां स्फुटमवोचत्। तद्यथा- 'पदवाक्यप्रमाणज्ञा नित्यं पक्वान्नभोजिनः। तावत्कुमारशिक्षेयं बालानां प्रातराशवत्' इति। सेयं स्वग्रंथस्य ग्रंथांतरैरगतार्थता अस्यां युवशिक्षायामपि तथैव वेदितव्या। पुरुषार्थसाधनरूपे पुरुषबुद्धिगोचरतामतिक्रांते विषये अपौरुषेयवेदवचनादन्यत् किमपि प्रमाणं न प्रवर्तत इति मत्वैव ग्रंथारम्भे वेदप्रामाण्यं सनिर्भरं प्रसाधितम्। तेन च वेदानां पुरुषनिर्मितत्वं, अत एव च

संदिग्धप्रमाणभावं च वदन्तः परास्ताः। पुरुषा हि प्रत्यक्षादिप्रमाणांतरेणार्थमुपलभ्य पश्चादेव वाक्यानि रचयन्तो दृश्यन्ते। अत एव च वदन्ति अभियुक्ताः 'अर्थं बुद्ध्वा शब्दरचना' इति। एवं च पुरुषवचसां प्रमाणांतरमूलकत्वनियमे स्थिते केन नाम प्रमाणेन वेदवाक्यार्थाः पुरुषैरधिगताः, इत्ययं प्रश्नः वेदपौरुषेयत्ववादे अपरिहार्यो भवति। न हि कर्मोपासनाज्ञानमार्गाः वेदातिरिक्तेन प्रमाणेन श्रेयोहेतुतया अध्यवसातुं शक्यन्ते, अतीन्द्रियत्वादेषामर्थानाम्। अतीन्द्रियविषयकथा आस्ताम्, ऐन्द्रियकेषु व्यावहारिकविषयेष्वपि शब्दप्रमाणप्राबल्यं दुरपह्नवम्। सेवका हि स्वामिकार्याणि प्रसाधयन्तः 'किमत्र ते प्रमाणम्' इति पृष्टाः स्वामिवचनमेव आज्ञारूपं प्रमाणयन्ति। विशिष्य च लोके सैनिकनियमेषु शब्दप्रमाणप्रधानता निराबाधा संदृश्यते। सेनापतेराज्ञानुसारेण अप्रवर्तमानः, मन्थरप्रवर्तनानो वा सैनिकः अनुपदमेव वधयोग्यो भवतीति किल सेनाशासनप्रकारः। तथा च शब्दप्रामाण्यमङ्गीकुर्वतां केवलं हेतूपन्यसैरेव तत्तदर्थान् साधयितुमिच्छतां साकल्येन लोकयात्रानिर्वहणेऽपि नाधिकारः, किमु वक्तव्यं अतीन्द्रियपरमार्थावाप्तिसाधनेषु? तदेतत्सर्वमभिप्रेत्यैव शब्दप्रमाणस्य प्रत्यक्षादिप्रमाणांतरापेक्षया विलक्षणसामर्थ्यशालितां प्रदर्शयितुकामैः श्रीशबराचार्यैः स्वकीये मीमांसाभाष्ये इत्थमुद्घोषितम्- 'चोदना हि भूतं भवन्तं भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुं, नान्यत्किंच, नेन्द्रियम्' इति। अतः श्रेयस्कामैः सर्वप्रमाणमूर्धन्यं वेदप्रमाणमेव अनन्यशरणतया संसेवनीयमिति निर्गलितार्थः।

एवं प्रतिमोपासनविषये अवैदिकत्वभ्रमेण विवदमानानां वादिनां मतमपि अस्मिन् ग्रंथे सम्यगेव समुत्सारितम्। क्वचिदपि वेदे प्रतिमोपासनाविधिर्नास्तीत्यतो नाचरणीया प्रतिमोपासनेति वादिनामाशयः। प्रतिमापूजनादेरुपासनाप्रकारस्य वेदसंमतत्वाभावे किमर्थं वेदेषु शिवविष्ण्वादिमूर्तीनां, तदीयानामायुधवाहनादिपरिकराणां समुल्लेखः कृतः? किमर्थंच श्रीभगवान् वासुदेवः अर्जुनं प्रति भगवद्गीतायां 'यो यो यां यां भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ' इत्यादिना सकलमूर्तिपूजाभिरपि अहमेव पूजितो भवामि, इत्यभिप्रायं प्रकटीचकार? कथं च श्रीशंकरभगवत्पादाचार्याः तत्र तत्र

श्रीशारदादिमूर्तिप्रतिष्ठानेन मूर्तिपूजासंप्रदायं परिपोषयामासुः? इत्येवमादिविचारे क्रियमाणे मूर्तिपूजायाः प्रामाणिकत्वं सुस्पष्टमवगम्यते। एवं स्थिते 'वेदोक्तत्वाभावेन मूर्तिपूजा अप्रामाणिकी' इति सकलवेदानामपरोक्षदर्शिन इव वचनं वक्तुर्धृष्टतामेव प्रकाशयति। किंच आस्तां मूर्तिपूजाकथा। तदितराणि वेदविहितकर्माणि वादिनामाचरणे वर्तन्ते किम्? कदापि नहि। आलस्यनास्तिक्यादिभिरनेकैः कारणैः वेदोक्तरीत्या कर्मानुष्ठाने विमुखानां, अज्ञसमाजे प्रौढिमासादयितुं नवीनं शास्त्रार्थमुद्भावयतां, अत एव च अनादिकालप्राप्तशिष्टाचारसिद्धानर्थान् विक्षोभयतां सर्वज्ञमन्यानां गतिरीदृश्येवेति उपेक्षणीया एवैते। अतो ग्रंथकारोक्तदिशा प्रतिमोपासना प्रामाणिक्येवेति सिद्धम्। इत्थमयं सर्वांगसुमनोहरो युवशिक्षाग्रंथः सन्मार्गप्रवर्तनेन लोकानुपकुर्वन् चिरं विराजतामिति श्रीदत्तात्रेयगुरुचरणौ संप्रार्थ्य इयं प्रस्तावना उपसंह्रियते।

**'मीमांसाविद्वान्' 'पंडितप्रवरः'**
**पाटणकरसुब्रह्मण्यशास्त्री**

।। श्रीगणेशदत्तगुरुभ्यो नमः।।

**श्री.प.प. वासुदेवानन्दसरस्वतीस्वामिविरचिता**

# युवशिक्षा

**भजेऽम्बुजाक्षं सततं जिताक्षं दग्धाघकक्षं धृतभक्तपक्षम्।**
**भैक्ष्यान्नभक्षं कृतधर्मरक्षं दक्षं सुशिक्षं सुतितिक्षयक्षम्।।१।।**

ॐ श्रीगणेशाय सरस्वत्यै गुरवे च नमः। तदेव लग्नं सुदिनं तदेव ताराबलं चंद्रबलं तदेव। विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि।।१।। पंगुं जंघालयन्ति विगिरमपि नरं वाक्पटुं भावयन्ती स्वज्ञं मां प्रैरयच्छ्रीनृहरियतिकृपाप्रौढधीमन्नृशिक्षाम्। व्याख्यातुं वासुदेवीं सुगहनविषयां किं समालोच्य नैतज्ज्ञाने भाग्यं मदीयं बहुजनिनिचितं यातमुद्यद्दशां नु।।२।। किं नु तद्दुःशकं तेषां दुग्धा यैर्महिषी वशा। वशा यत्कृपया वेदवाणी चरमजन्मनः।।३।। नत्वा तच्चरणद्वंद्वं द्वंद्वतापाघदैन्यहृत्। हृदब्जे सुचिरं ध्यातं ध्यातुरन्तस्तमोपहम्।।४।। श्रीवासुदेवयोगीन्द्रयतिवर्याङ्घ्रिपङ्कजम्। स्मृत्वा तदीयां व्याख्यास्ये युवशिक्षां यथामति।।५।।

इह खल्वनादौ संसारे अविद्यया आस्वर्गादावीचि परिभ्रमतां सत्कर्मपरिपाकवशादवाप्तमानुषशरीराणां जंतूनां त्रिविधतापोपशमपूर्वकमात्यंतिक-निःश्रेयसावाप्तये प्रदर्शितो वैदिकः पन्थाः परमकारुणिकेन महेश्वरेण। तत्र च कर्मोपासनाज्ञानभेदेन प्रवृत्ता विविधा अपि पंथानोऽधिकारिवैविध्येन व्यवस्थिताः, सर्वेऽपि ब्रह्मात्मैक्यप्रतिपत्तावेव पर्यवस्यन्ति। व्याख्यातं चैतत् सर्वापेक्षाधिकरणे आश्रमधर्माधिकरणे च बादरायणेन। त एते पन्थानो यदा संकरं वा लोपं वा भजन्ते तदा तत्संस्थापनेन सतां परित्राणाय इतरेषां च विनाशाय अनामरूपोऽपि मायाकल्पितनामरूपाभ्यामवतरति भगवान् वासुदेवः। व्यवस्थापयति च यथापूर्वं सनातनधर्मपथम्। तदुक्तं भगवता 'यदा यदा हि धर्मस्य' इति। प्रसिद्धं चैतत् सर्वेषु पुराणेतिहासादिग्रंथेषु। यथा हि कृतादिषु युगान्तरेषु रामकृष्णाद्यैरवतारैर्दुष्टनिबर्हणद्वारा सद्रक्षणं चक्रे; यथा वा कपिलदत्ताद्यैरवतारैः सांख्ययोगादिसरणीर्लुप्तपूर्वाः पुनः प्रवर्तयांचक्रे; एवमेव स जगदीश्वरः कलौ ऊनपंचसहस्रेषु संवत्सरेषु गतेषु, लुप्तप्राये वर्णाश्रमधर्मे, शूद्रकल्पेषु ब्राह्मणेषु, धर्मोपेक्षकेषु पार्थिवेषु वैदिकधर्मावनतिमपनेतुमवततार कलया विप्रकुले श्रीमान् वासुदेवः। यं किल वासुदेवाभिधां दधानं श्रीदत्तात्रेयमाहुः। यस्य निष्कलंकद्विजराजावदातेन यशसा शुक्लीकृतेव सागरवलयांकिता मेदिनी। स च

क्रमशोऽवाप्तनिखिलगृह्यसंस्कारोऽल्पीयसा कालेनाभ्यस्तसमस्तविद्यास्थानो यथाऽऽश्रमं कर्माण्यनुतिष्ठन् श्रीदत्ताराधनविशुद्धचेता यमाद्यष्टांगयोगनिष्ठोऽपरोक्षीकृतब्रह्मविद्यो लोकानुग्रहार्थं क्रमेण तुरीयाश्रमं स्वीकृत्य धर्मामृतस्राविभिरात्मनो मधुरवचोभिः साक्षात्, परोक्षं च ग्रंथरूपेण श्रद्दधानाञ्जनानुपदिश्य, परेषामपि चित्तानि चित्रैः स्वचरित्रैः स्वायत्तीकृत्य, स्वधर्मपथे प्रवर्त्य स्वयं तुरीयातीतं पदं निरगात्। सोऽयं परमहंसपरिव्राजकाचार्यः पदवाक्यप्रमाणपारीणः कर्मोपासनाज्ञानरूपकांडत्रय-प्रतिपादकाननेकान् ग्रंथान् प्राणैषीत् संस्कृतभाषायां महाराष्ट्रीयभाषायां च। तत्र कांश्चिद्दुरधिगमान् स्वयमेव व्याख्यातवान्। तत्रायमकृतव्याख्यानो युवशिक्षाख्यो ग्रंथः श्रीवासुदेवानंदसरस्वतीगुरुचरणकमलमिलिंदायमानमानसैः श्रीमत्परमहंसैः श्रीनृसिंहसरस्वतीयतिवर्यैः प्रेरितेन मया यथाप्रज्ञं व्याख्यायते।। अत्र हि चतुर्विधपुरुषार्थेषु धर्मस्यैवाभ्यर्हितत्वात्, सर्वेषां पुरुषार्थानां साधनतया वेदप्रतिपाद्यत्वाच्च प्रथमं तस्यैव तावत् जैमिनिनां बादरायणेन च निर्णीतं स्वरूपं दिदर्शयिषुराचार्यः प्रारिप्सितस्य ग्रंथस्य निर्विघ्नपरिसमाप्तिप्रचयगमनार्थं कृतमुपास्यदेवतासमरणरूपं मंगलं शिष्यशिक्षार्थं ग्रंथादौ निबध्नाति- भज इति। अंबुजाक्षं कमलनयनं सततं भजे। यतोऽयं धृतभक्तपक्षः भक्तपक्षपाती तद्रक्षणे दक्ष इत्यर्थः। पक्षपातेऽपि किमस्य सामर्थ्यमित्यत आह- दग्धाघकक्षं दग्धं पापतृणं येन तम्। सुष्ठु शिक्षा शासनं यस्य। कृता धर्मरक्षा येन। जिताक्षं जितेन्द्रियं यतिनमित्यर्थः। अत एव भैक्ष्यान्नभक्षम्। सुष्ठु तितिक्षा क्षमातिशयो यस्मिन् स चासौ यक्ष इव यक्षः कुबेर इत्यर्थः। कुबेरे धनातिशय इवास्मिन् क्षमातिशय इति भावः।।१।।

(आद्यश्लोके व्याख्यानान्तरं, येन ग्रंथस्यास्य प्रसन्नगंभीरत्वमीश्वरमाहात्म्यव्यंजकत्वं चावगम्येत)

श्रीगणेशाय नमः।। अथ तत्रभवान् श्रीदत्तभक्तशिखामणिः अपरोक्षीकृतपरात्मतत्त्वः परोद्दिधीर्षामात्रकृतपराग्व्यवहारः श्रीवासुदेवयतीन्द्रः स्वोपज्ञया कुमारशिक्षया अधिगतकर्मतत्त्वान्, नित्यनैमित्तिकपरमेश्वरार्पितकर्मानुष्ठान-विशदीकृतांतरंगान् चित्तैकाग्र्यप्रयोजनसगुणोपासनाधिकारिणः उपलभ्य; 'योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्' इति भागवतं वचनमनुसंधाय सांगमुपासनातत्त्वमुपदिदिक्षुः; कर्माधिकारदशामुत्तीर्य उपासनाभूमिकामधिरोहतः साधकान् युवत्वेन परिभाषयन् वेदान्तार्थसंग्रहभूतं युवशिक्षानामकं प्रकरणं प्रारिप्समानः प्रत्यूहव्यूहपरिहाराय प्रचयगमनाय च

श्रीदत्तात्रेयभजनरूपं मंगलमाचरति- भजेंबुजाक्षमिति। **भैक्ष्यान्नभक्षं** अम्बुजाक्षं सततं भजे। **भैक्ष्यं**- भिक्षाया आगतं **अन्नं** भक्षयति तादृशम्; अनेन भिक्षान्नभोक्तृत्वेन संन्यासित्वप्रतिपादनात् श्रीदत्तस्वरूपत्वं सूच्यते। अंबुजे इव अक्षिणी यस्य तं श्रीमहाविष्णुं **सततं** निरंतरं **भजे**। भजत्यर्थः सेवा प्रकृते च नमनात्मिका; नमस्क्रियाया अपि मंगलत्वमनुशिष्यते अभियुक्तैः- 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखं' इत्यादिना। **अंबुजाक्ष**पदेन नमस्कार्यतावच्छेदकं सौंदर्यं ध्वन्यते। मूर्तित्रयस्वरूपेण अवतरन्नपि भगवान् दत्तात्रेयः श्रीविष्णोरेव अंशावतार इति स्पष्टं भागवतादौ। कीदृशं अंबुजाक्षम्**? जिताक्षं**- जितानि निगृहीतानि अक्षाणि अंतर्बाह्येन्द्रियाणि येन तम्; इदमपि विशेषणं जितेन्द्रियत्वेन दत्तस्वरूपत्वमेव स्फोरयति। ननु विघ्नपरिजिहीर्षया दत्तात्रेयभजनात्मकं मंगलं क्रियते, तद्भजनस्य विघ्नध्वंसजनकत्वे किं मानमित्यत आह- **दग्धाघकक्ष**मिति। अघमेव कक्षस्तृणं दग्धो येन तं, 'कक्षौ तु तृणवीरुधौ' इत्यमरः। स्मरणकीर्तननमनादिना पापहन्तारमित्यर्थः। तथा च विघ्नस्यापि समाप्तिप्रतिबंधक-दुरितत्वात्, तद्भजनस्य च अघसामान्यनाशकत्वात् विघ्ननाशकत्वं दंडापूपिकया सिद्धमिति भावः। ननु भगवतः अघदाहकत्वस्वभावत्वे भजनस्य कैमर्थ्यमित्यत आह- **धृतभक्तपक्ष**मिति। धृतो भक्तानां पक्षो येन तादृशं; तथा च प्रभोः सर्वजन्तुषु समत्वेऽपि अघदाहकत्वस्वभावः सूर्यकान्तेष्विव सर्वत्र प्रसृमरं सावित्रं तेजः भक्तेष्वेव फलतीति भावः। तथा हि जगौ भगवान् 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्' इति। ननु कुतोऽयं निर्द्वंद्वस्यापि भक्पक्षपातः इति चेत्तत्राह **कृतधर्मरक्ष**मिति। कृता धर्मस्य रक्षा येन तम्। धर्मो हि जगतो धारकः, तद्रक्षणायैव हि स्वस्य अवतरणं प्रतिजज्ञे भगवान्; स च धर्मो भक्तेष्वेव आयतते इति तत्पक्षपरिग्रहो युज्यत इति भावः। अत एव च आचष्टे गीतासु 'यदा यदा हि धर्मस्य' 'परित्राणाय साधूनां ' भजते मामनन्यभाक् साधुरेव स मन्तव्यः' इति भक्तानामेव साधुत्वं, तत्परित्राणमेव च अवतरणबीजं धर्मरक्षणमिति। ननु मा भूत् जगद्धारणं, मा च भूत् धर्मस्य रक्षणं इत्यत आह- **दक्ष**मिति। दक्षं कुशलं जगद्व्यापारे सृष्टिस्थित्यादौ इत्यर्थः। इदमेव हि दाक्ष्यं यत् स्वव्यापारपरिरक्षणं नाम। तथाच जगत् पालयतः, तद्धारकस्य धर्मस्य रक्षणमावश्यकमेवेति भावः। ननु भगवद्भजनस्य दुरितनाशकत्वेऽपि इष्टप्राप्त्युपायत्वाभावात् नैतदावश्यकतामावहतीत्याशंक्य सततभजनेन प्रसन्नो भगवान् इष्टतमस्वरूपप्राप्त्युपायभूतं ज्ञानं ददातीत्याशयवानाह- **सुशिक्ष**मिति। शोभना

स्वप्राप्त्युपायभूता शिक्षा विद्यादानं यस्य तम्; एतदेव च गीतं भगवता 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इति। ननु प्रभोः दुरितनाशनसामर्थ्ये सत्यपि प्राणिषु दोषभूयस्त्वेन द्वेषसंभवात् नासौ प्रसीदेत् इत्याशंक्य दयानिधित्वद्योतनाय परमतितिक्षावत्त्वेन विशिनष्टि- **सुतितिक्षयक्ष**मिति। सुष्ठु तितिक्षा क्षांतिर्येषां ते सुतितिक्षाः संयमिनः तेषां यक्षं श्रेष्ठं योगिराजमित्यर्थः। यद्वा तितिक्षायाः शमदमादिसाधनांतराणामुपलक्षणत्वेन सुतितिक्षाः साधनसंपन्नाः तेषां यक्षं देवं उपास्यमित्यर्थः। 'तन्न व्यजानत किमिदं यक्षमिति' इत्यादिश्रुतौ परमात्मनि यक्षपददर्शनात्, तथा च तत्रत्यं भाष्यं 'यक्षं पूज्यं महद्भूतमित्यर्थः' इति।।१।।

**सृष्ट्यादिहेतो वरधर्मसेतो**
**स्वयं त्वहेतो कृतभूरिमन्तोः।**
**नान्यो नियन्तोद्गतिदश्च जन्तोः**
**सन्तोऽत्र सत्साक्षिण उच्चकेतो।।२।।**

ननु कोऽयमीदृशो यतिवरस्तत्राह- **सृष्ट्यादी**ति। **आदि**ना स्थितिलयौ। सृष्टिस्थितिलयहेतो, अभिन्ननिमित्तोपादानभूतेत्यर्थः। **स्वयं तु अहेतुः** न विद्यते हेतुरस्य अनादिरित्यर्थः। ***वरः*** सनातनो वैदिक**धर्मः** तस्य **सेतु**र्धारकः तत्संबुद्धौ हे *वरधर्मसेतो*। कीर्तिरूपो ध्वजो यस्य स **उच्चकेतुः** विश्वकीर्तिरित्यर्थः। **कृतभूरिमन्तोः** कृतबहुलापराधस्य जीवस्य *नियन्ता* पालकः, **उद्गतिदः** अभ्युदयनिःश्रेयसप्रदश्च त्वत्तो को**ऽप्यन्यो ना**स्ति अतस्त्वामेव भजामि। नन्वस्य जीवोद्धारकत्वे किं मानमित्यत आह- **अत्र** अस्मिन विषये; **सन्तः** साधवः; **सत्साक्षिणः** उत्कृष्टाः साक्षिण इत्यर्थः। अत्र हि श्लोकद्वयेन सृष्ट्यादिहेतुत्वधर्मसेतुत्वादिलक्षणैः सगुणं ब्रह्म प्रस्तुत्य, तस्यैव धर्मरक्षकजिताक्षत्वादिविशेषणैर्यतित्वेन धर्मरक्षणार्थमवतीर्णत्वं प्रतिपाद्य तद्भजनात्मकं मंगलमनुतिष्ठताऽऽचार्येण वर्णाश्रमप्रयुक्तो वैदिक धर्मः सगुणोपासनं चास्य ग्रंथस्य विषय इति सूचितम्। दग्धाघकक्षं धृतभक्तपक्षमिति विशेषणद्वयेन पापनाशोऽप्रतिहतकामत्वं च क्रमेण तत्फलं प्रयोजनत्वेन प्रदर्शितम्। तत्कामो वर्णाश्रमादिसंपन्नश्चाधिकारी। संबंधश्च विषयशास्त्रयोर्ज्ञाप्यज्ञापकभाव इत्यादि यथायथमूह्यम्।।२।।

**लीलाकैवल्यमीशस्य सर्वज्ञस्यांशकर्मणाम्।**
**सापेक्षत्वाच्च वैषम्यनैर्घृण्ये फलदस्य न।।३।।**

एवमुपक्रांतस्य ग्रंथस्य अनुबंधचतुष्टयं प्रदर्श्य अधुना निष्कामस्वधर्माचरणसंतुष्टात् सर्वज्ञात् सर्वशक्तेः परमेश्वरादेव निःश्रेयसावाप्तिरिति विवक्षया तस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वं च प्रतिपादयति- लीलेति। दृश्यमानं विचित्रकार्यात्मकमिदं जगत् ईश्वरेण लीलामात्रेणैव निर्मितम्, नहि केनचित् फलोद्देशेन। तस्य पूर्णकामत्वात्। न चेदं निर्मातुं तस्य प्रयासलेशोऽपि, ईशत्वात्, सर्वज्ञत्वाच्च उच्छ्वासादिवत् स्वभावादेवेदमुत्पद्यते। नात्र फलापेक्षा राजतदमात्यादिलीलावत्। राजादीनां कथंचित् फलसंभवेऽपि सर्वज्ञस्य ब्रह्मणो न तत्संभवति, नित्यतृप्तत्वात्। अन्स्मिन् जगति केचिन्नित्यसुखिनो दृश्यन्ते देवादयः। केचित्सुखदुःखसाधारणा मानुषाः। वैषम्यं खल्विदं जगत्स्रष्टुः। संहरति चैतत्सर्वं संवर्ते, अतो निर्दयत्वं च तस्य दृश्यते इति चेन्न। फलदस्य सुखदुःखदातुः परमेश्वरस्य; अंशकर्मणां जीवकर्मणां सापेक्षत्वात्। जीवस्यांशत्वमुपपादितं बादरायणेन 'अंशो नानाव्यपदेशादि'त्यत्र। जीवकृतपुण्यपापापेक्षं हि फलं ददाति परमेश्वरो राजेव सेवापेक्षं वेतनं भृत्यानाम्। अतो न प्रसज्येयातां वैषम्यनैर्घृण्ये। उपपादितं चैतत् 'वैषम्यनैर्घृण्ये न सापेक्षत्वादि'त्यत्र शारीरके।।३।।

**दृष्टे स्वस्याप्यनीशत्वे सुखादेः पारतंत्र्यतः।**
**न सर्वज्ञेश इत्युक्तिर्माता वंध्या ममेतिवत्।।४।।**

ननु कथमस्यैतावता सर्वज्ञत्वं सर्वेश्वरत्वं चाभ्युपेयमित्याशंक्याह- दृष्ट इति। सुखस्य आदिना दुःखनाशतत्साधनानां च स्वायत्तत्वाभावेन पारतंत्र्यात्, स्वस्य आत्मनः, अनीशत्वे साक्षाद्दृष्टेऽपि नास्ति सर्वज्ञ ईश्वरः कोऽपीति वचनं वक्तुर्मौढ्यमेव प्रकाशयति न सर्वज्ञस्य सर्वशक्तेरीश्वरस्याभावं, मम माता वंध्येति वाक्यवत्।।४।।

**अचिन्त्यरचनाभिज्ञा यच्छक्तिस्तं स्वकर्मभिः।**
**तोषयेत्तत्प्रसादाद्धि विमुक्तः स विमुच्यते।।५।।**

एवं सर्वज्ञेशसद्भावानुमानेन प्रदर्श्य तत्कृपयैव मुक्तिसिद्धिरित्याह- अचिंत्येति। यस्य शक्तिर्माया अचिंत्यघटनापटीयसी तं परमात्मानं स्वकर्मभिर्वर्णाश्रमोक्तैस्तोषयेत्। तदुक्तं कुमारशिक्षायां 'धर्मार्चितो यथा तुष्येदीश्वरो न तथान्यथा' इति। हि यस्मात् तत्प्रसादादेव कामादिचित्तदोषविमुक्तः सन् संसारभयाद्विमुच्यते नान्यथा।।५।।

**तावत्कर्माचरेद्यावद्देहादौ माययात्मधीः।**
**आपाततः स नियतं प्रत्यवायजिहासया।।६।।**

ननूक्तं स्वकर्माचरणं किमवधि कर्तव्यमित्याशंक्याह- तावदिति। यावद्देहादौ

आदिना पुत्रमित्रकलत्रादौ प्राणेन्द्रियसंघाते च। मायया आत्मबुद्धिः अहं ममेत्यापाततो दृश्यते। तावत्कर्मैव कुर्यात् यदि देहादावात्मधीरनुवर्तते इति। तत्र हेतुमाह- प्रत्यवायजिहासयेति। अस्ति हि नियतानामपि कर्मणामानुषंगिकं फलं 'कर्मणा पितृलोक' इति श्रुतेः; अत उक्तं प्रत्यवायजिहासयैव कुर्यादिति, नान्यकामेन।।६।।

**अग्निहोत्रादि कर्म स्वःसाधनीभूतमेव तत्।**
**ज्ञानोद्देशकृतं ज्ञानसाधनीभूतमक्षयम्।।७।।**

ननु 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति श्रुतेः स्वःसाधनीभूतानामग्निहोत्रादिनित्यकर्माणां कथं प्रत्यवायपरिहारत्वं कथं वा मोक्षसाधनत्वमित्यत आह- अग्निहोत्रेति। अग्निहोत्रादिकं स्वर्गसाधनीभूतमपि तदेव निष्कामत्वेन केवलं ज्ञानोद्देशमात्रेणानुष्ठीयते चेत् चित्तशुद्धिद्वारा मोक्षायैवोपयुज्यते। अक्षरं चावतिष्ठते। स्वर्गादिफलदानेनानुपक्षीणत्वात्।।७।।

**अग्नीन्धनाधिकरणे ज्ञानं कर्मानपेक्षकम्[१]।**
**उक्तमन्यत्र[२] तु परंपरया मुक्तिसाधनम्।।८।।**

ननु कथं कर्मणो मोक्षहेतुत्वमित्याशंक्य परिहरति- अग्नीति। ज्ञानं हि कर्मानपेक्षमेव मोक्षमुत्पादयति। फलदाने स्वातंत्र्यात्। उक्तं चैतद्बादरायणेनाग्नीन्धनाधिकरणे। तथाहि पूर्वपक्षे- आत्मविज्ञानं कर्मसंबंध्येव। आत्मनः कर्तृत्वेन कर्मशेषत्वात्, व्रीहिप्रोक्षणादिवत्। 'तरति शोकमात्मवित्' इत्यादिफलश्रुतिस्त्वर्थवादः। 'यस्य पर्णमयी जुहूर्भवति स पाप ँश्लोक ँ शृणोति ' इत्यादिवत्। नन्वनारभ्याधीतस्यात्मविज्ञानस्य कथं प्रकरणादिहेतुमंतरेण क्रतुसंबंधो ज्ञातव्यः। यद्युच्यते कर्तृद्वारेणेति, न तत्संभवति व्यभिचारित्वात्। कर्तुर्लौकिकवैदिककर्मसाधारण्यात्। पर्णमयीत्वं त अनारभ्याधीतमपि जुहूसंबंधेन, जुह्वाश्चाव्यभिचारिक्रतुसंबंधेन संबध्यते क्रतुनेति चेन्न। व्यतिरेकविज्ञानेन हि ज्ञायते वैदिकानामेव कर्मणामंगत्वमात्मनः। लोकिकेषु तस्यानुपयोगात्, वैदिककर्मस्वेव हि तदुपयुज्यते। तेषां प्रायो देहपातोत्तरकालीन स्वर्गादिफलवत्त्वात्। श्रूयते च जनकादिभिर्ब्रह्मनिष्ठैरनुष्ठितानि कर्माणीति। ज्ञानेनैव पुरुषार्थसिद्धौ विद्वद्भिस्तानि कुतः क्रियेरन्। 'यदेव विद्यया' इति श्रुतिरपि विद्यायाः कर्मशेषत्वे प्रमाणम्। फलारंभेऽप्युभयोः सहकारित्वं दृश्यते 'तं विद्याकर्मणी समन्वारभेते' इत्यत्र। अधिकारोऽपि कर्मणि

१. रुचिद्वारोपकुर्वन्ति कर्माण्यात्मविमुक्तये। अज्ञानस्याविरोधित्वान्न साक्षादात्मबोधवत्।
२. सर्वापेक्षाधिकरणे।

समस्तवेदार्थविज्ञानवत एव दृष्टः 'आचार्यकुलाद्वेदमधीत्य' इत्यादिश्रुतौ। नन्वत्रार्थविज्ञानविधानं नास्ति, नैष दोषः, वेदाध्ययनमर्थावबोधपर्यंतं, दृष्टार्थत्वादिति पूर्वतंत्रे स्थितम्। किंच 'कुर्वन्नेवेह कर्माणि' इत्यादिनियमाच्चात्मज्ञानस्य कर्मशेषत्वमिति प्राप्ते, उच्येत। शारीरादात्मनोऽधिकः संसारधर्मरहितः परमात्मा हि वेदांतेषु वेद्यत्वेनोपदिश्यते, न कर्ता भोक्ता शारीरः। न हीदृशपरमात्मविज्ञानं कर्मणां प्रवर्तकं प्रत्युतोच्छेदकं भवति। यदुक्तं ब्रह्मनिष्ठैरनुष्ठितानि कर्माणीति। तदप्यपार्थम् 'एतद्ध स्म वै तद्विद्वांस आहुः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे येषां नोऽयमात्माऽयं लोकः पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे' इत्यादिश्रुतिषु तदभावस्यापि श्रवणात्। सोपाधिकब्रह्मविद्यायामेव जनकस्य वैश्वानरविद्यायामिव कर्मसाहित्यदर्शनात्। 'यदेव विद्यया' इति श्रुतिस्तु प्रकृतोद्गीथविद्याविषया, न सर्वविद्याविषया। यत्तु फलारंभे सहकारित्वमुक्तं विद्याकर्मणोस्तदपि भिन्नपुरुषाभिप्रायम्। विद्यान्यमन्वारभते कर्मान्यमिति। यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते, पंचाशदेकस्मै पंचाशदपरस्मै तद्वत्। तदुक्तं 'विभागः शतवत्' इति। न चेदं मुमुक्षुविषयं 'अथाकामायमान' इति तस्य पृथगुपक्रमात्। यदुक्तमर्थज्ञानस्याधिकारकारणत्वं, तदपि न युक्तम्। औपनिषदात्मज्ञानस्य स्वातंत्र्येण प्रयोजनवत्त्वे सिद्धे कर्माधिकारकारणत्वासिद्धेः, क्रत्वंतरमनुतिष्ठासोः क्रत्वंतरज्ञानवत्। 'कुर्वन्नेवेह' इति श्रुतिस्तु न विद्वांसमेव नियमयति अविशेषात्। 'न कर्म लिप्यते नर' इति वक्ष्यमाणविद्यास्तुत्यर्थमेतेषां कर्मानुमतिर्वेति ज्ञातव्यम्। अपिच विदुषां प्रजादिभिः प्रयोजनं नास्तीति श्रूयते 'किं प्रजया करिष्याम' इत्यादौ। न च ब्रह्मज्ञानफलं क्रियाफलवत् कालांतरभावि। किं च अग्निहोत्रादिवैदिककर्माभाववतामूर्ध्वरेतसामेतज्ज्ञानं विधीयते श्रुत्या। तेन विद्यायाः स्वातंत्र्यमेव प्रतीयते न कर्मशेषत्वम्। अतएव च विद्यायाः स्वातंत्र्येण पुरुषार्थहेतुत्वान्न तत्राग्नींधनाद्युपलक्षिताश्रमकर्मापेक्षेति मोक्षसिद्धौ विद्यायाः स्वातंत्र्यमुक्त्वाऽथ सर्वथा कर्मानपेक्षत्वे प्राप्ते, अन्यत्र तु- सर्वापेक्षाधिकरणे तु स्वोत्पत्तौ ज्ञानं कर्मापेक्षक इति प्रतिपाद्य कर्मणः परंपरया मुक्तिसाधनत्वं प्रतिपादितम्। तथाहि उत्पन्नं ज्ञानं फलसिद्धिं प्रति न किंचित्साधनान्तरमपेक्षते, अपेक्षते तु स्वोत्पत्तिं प्रति। 'विविदिषन्ति यज्ञेन' इति श्रुतेः विविदिषासंयोगान्निश्चीयते ज्ञानसाधनत्वमेतेषां यज्ञादीनाम्। 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतयस्तथा 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः। कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति स्मृतिरपि कर्मणां विद्यासाधनत्वं दर्शयति। ननु 'तस्मादेवंविच्छांतो दान्त....आत्मानं पश्यति' इति श्रुतितः शमादीनामेव विधानात्तेषां चावश्यानुष्ठेयत्वात् विविदिषन्तीत्यत्र च विध्यश्रवणात् नापेक्षा

कर्मणां विद्यायामित्याशंक्य यज्ञादिश्रुतेरपि विधित्वाविशेषात् शमादिवदाश्रमकर्माण्यपि विद्योत्पत्तावपेक्षितानीति सिद्धांतितम्। तत्र विद्यासंयोगाच्छमादीनि प्रत्यासन्नानि, विविदिषासंयोगात्तु यज्ञादीनि प्रकृष्टानीति विवेकः।।८।।

**ततः प्रमाणबलतो मुमुक्षुर्नियतं चरेत्।।**

**ईशप्रीत्या अनासक्त्या तद्योगारूढतावधि।।९।।**

यत एवं मोक्षस्य कर्मापेक्षा तस्मान्मुमुक्षुणा नियतं कर्मावश्यमेव कर्तव्यमित्याह- तत इति। यस्माद्वर्णाश्रमप्रयुक्तनियतकर्माणि फलानभिसंधानेन परमेश्वरप्रीतय एवानुष्ठितानि मोक्षसाधनानि भवन्तीति सिद्धं स्वतःप्रमाणभूतश्रुतिप्रामाण्यबलात् तस्मान्मोक्षकामेन तानि नित्यनैमित्तिकानि फलसंगं विहाय यथावर्णं यथाश्रमं ब्रह्मार्पणबुद्ध्या कर्तव्यानि। तदुक्तं गीतासु- 'तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः। दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः' इति; तथा 'ब्रह्मार्पणं ब्रह्महवि'रिति च। एतानि कर्माणि किमवधि कर्तव्यानीत्याह- योगारूढतावधीति। यथोक्तं भगवता- 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते' इति। तल्लक्षणं च तत्रैव 'यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्ञते। सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते' इति।।९।।

**अपौरुषेयं यद्ब्रह्म सद्धर्मप्रतिपादकम्।।**

**महाभूतसमुत्पन्नं प्रमाणं वेद उच्यते।।१०।।**

वेदस्य स्वतःप्रामाण्यं प्रतिपादयति- अपौरुषेयमिति। ब्रह्म वेदः तद्धि प्रमाणमुच्यते। कुतः; यत् यस्मात् तत् अपौरुषेयं ब्रह्म सद्धर्मप्रतिपादकं महाभूतसमुत्पन्नं च तस्मात्। पौरुषेये हि वचसि भ्रमप्रमादादिपुरुषदोषानुप्रवेशशंकया प्राप्तमप्रामाण्यं नापौरुषेये वेदेऽपि प्राप्नोति। अप्रामाण्यकारणपुरुषसंसर्गाभावात्। तथा प्रत्यक्षादिप्रमाणांतरानवगम्यसच्चिदानंदब्रह्मस्वरूपस्य, अदृष्टस्वर्गादिफलप्रापकस्य धर्मस्य च प्रतिपादकत्वात्। न चात्रानुवादत्वेनापि वैयर्थ्यरूपमप्रामाण्यम्। धर्मब्रह्मणोरन्यतोऽप्राप्तत्वात्। सर्वज्ञात्सर्वशक्तेर्जगत्पालकात्सर्वभूताप्तमहाभूतवाच्याच्छ्रीविष्णोः समुत्पन्नत्वादपि नाप्रामाण्यम्। तथा च श्रुतिः 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद' इत्यादि। ननु विरुद्धमिदमुच्यते अपौरुषेयत्वं महाभूतसमुत्पन्नत्वं च। नैष दोषः। प्रमाणांतरेणार्थमुपलभ्य रचितत्वं हि पौरुषेयत्वं इति तल्लक्षणात्। तस्य चात्राभावात्। तथा च वक्ष्यति 'अथापि पौरुषेयत्वं प्रवक्तुं नैव शक्यत'

इति। तस्मान्निर्विवादं सिध्यति वेदस्य प्रामाण्यम्।।१०।।

**विरोधो वाचा विरूपनित्ययेति गिरेति चेत्।**

**न हि सा गीर्मता गौणी नित्यत्वं पूर्वसाम्यतः।।११।।**

ननु वेदस्योत्पत्तिमत्त्वे अनित्यत्वं प्राप्तम्। तथा च नित्यत्वश्रुतेर्विरोध इत्याह- विरोध इति। 'वाचा विरूपनित्यया' इति श्रुतिस्तु वेदवाचां नित्यत्वमाह, ततश्च विरोधः। उत्पत्तिमत्त्वेनैव प्रागभावसिद्धेः इति चेन्नेत्याह। हि यस्मात् सा नित्यत्वश्रुतिरूपा गीर्वाणी गौणी मता। कथं, यतः तदक्तं नित्यत्वं पूर्वसाम्यात् यादृशो हि वेदः पूर्वकल्पे आसीत्तादृश एवास्मिन्नपि कल्पे आविर्भवतीत्यर्थः। ज्वालाप्रवाहादिवन्नित्यत्वमितिभावः ।।१२।।

**अथापि पौरुषेयत्वं प्रवक्तुं नैव शक्यते।**

**तस्योपलभ्य रचितत्वानङ्गीकारतः खलु।।१२।।**

ननु नित्यत्वश्रुतेर्गौणत्वे पौरुषेयत्वमपरिहार्यमित्याशंक्याह- अथापीति। यद्यपि परमेश्वरादुत्पद्यते वेदस्तथापि तस्य पौरुषेयलक्षणाव्याप्तत्वान्न शक्यते पौरुषेयत्वं वक्तुम्। यतः प्रमाणांतरेणार्थमुपलभ्य रचितत्वमेव तल्लक्षणम्। न तथा चाङ्गीक्रियते निःश्वासश्रुतेस्तु स्वयमेवोत्पन्नत्वं प्रतीयते।।१२।।

**अर्थवादपरत्वात्तु वाचेति नित्यताश्रुतेः।**

**अपि सूत्रकृता वेदोत्पत्तिश्रुत्यनुरोधतः ।।१३।।**

**शास्त्रयोनित्वादितीशसर्वज्ञत्वेऽपि सूत्रितम्।**

**निःश्वासवदनायासाद्वेद ईशाद्विनिर्गतः ।।१४।।**

**अपौरुषेयो विज्ञेयः प्रमाणं तद्धि नो महत्।**

**वेदः स चेदृशो मंत्रब्राह्मणात्मक उच्यते ।।१५।।**

तथा 'वाचा विरूपनित्यया' इति श्रुतेरर्थवादपरत्वात्, तस्माद्यज्ञादित्यत्र स्पष्टमुत्पत्तिश्रवणात्, निःश्वसितश्रुतेश्च। सूत्रकृता बादरायणेनाप्युक्तम्- शास्त्रयोनित्वादिति। अनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोः प्रदीपवत्सर्वार्थावद्योतिनः पुराणन्यायमीमांसादिदशविद्यास्थानोपबृंहितस्य सर्वज्ञानाकरस्य ऋग्वेदादिलक्षणशास्त्रस्य असर्वज्ञादुत्पत्त्यसंभवात् सर्वज्ञाद्ब्रह्मण एवोत्पत्तिरिति तदभिप्रायः। शास्त्रमृग्वेदादि, तस्य योनिः कारणं ब्रह्मेत्यर्थः। एतेनैव ब्रह्मणः सर्वज्ञत्वसिद्धिः। 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेद' इति श्रुतेरप्रयत्नेनैव पुरुषनिःश्वासवदीश्वरात्प्रादुर्भूतो वेदः। न चास्य

तावता पौरुषेयत्वं सिध्यति। यतः परमात्मनो नास्त्येव वेदे स्वातंत्र्यं, पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात्। पुरुषस्वातंत्र्याभावमात्रमपौरुषेयत्वमिति सुसंमतं जैमिनीयानामपि। तस्मात्सिद्धं पुरुषजन्यत्वेऽप्यपौरुषेयत्वं वेदस्य। तेन किमित्यत आह- तत् प्रसिद्धं वेदरूपं नो अस्माकं वैदिकानां, महत्- प्रमाणांतरेणाप्रत्याख्येयं प्रमाणं हि। स च सर्वप्रमाणमूर्धन्यभूतः प्रमाणांतराविज्ञेयधर्मप्रापक ईदृशो वेदः किंलक्षण इत्यत आह- मंत्रब्राह्मणात्मक इति। कर्मानुष्ठानकालीनार्थस्मरणोपयुक्ता मंत्राः। तेषां विनियोगोऽनुष्ठानविधिर्वा यत्र विहितस्तद्ब्राह्मणम्।।१३।।१४।।१५।।

**स्मृतं ब्राह्मणकांडान्तर्गतमारण्यकं तथा।**
**अनुष्ठानहेतुभूतद्रव्यदेवप्रकाशकाः।।१६।।**
**मंत्रा ऋगादिभेदेन त्रिविधाः परिकीर्तिताः।**
**स्युः पादबद्धगायत्र्यादिछंदोलक्षिता ऋचः।।१७।।**

आरण्यकमपि ब्राह्मणकांडांतर्गतमेव। मंत्रलक्षणमाह- अनुष्ठानेति। कर्मकाले तदंगभूत द्रव्यदेवतादिस्मारका मंत्रा इत्युच्यन्ते। तेऽपि ऋग्यजुःसामभेदेन त्रिविधाः। ऋगादीनां लक्षणमाह- स्युरिति। अष्टाक्षरघटितैस्त्रिभिः पादैर्गायत्र्यादीनि जगत्यंतानि छंदांसि। एतल्लक्षणलक्षिता मंत्रा ऋच इत्युच्यन्ते। छंदोलक्षणं च पैंगले छंदःशास्त्रे, बह्वृचसंहितासर्वानुक्रमे, प्रतिशाख्ये वा दृष्टव्यम्।।१६।।१७।।

**ज्ञेया गीतिविशिष्टास्ता एव सामानि शिक्षया।।**
**यजूंषि तूभयविलक्षणानीह विचक्षणैः।।१८।।**

सामलक्षणमाह- ज्ञेया इति। ता एव छन्दोबद्धा ऋचः 'अदीर्घे दीर्घवत्कुर्यात्' इत्यादिसामशिक्षया गीतिविशिष्टा यदाऽधीयन्ते तदनीमेव सामान्युच्यन्ते। यजुर्लक्षणमाह- इह मीमांसायां विचक्षणैर्विद्वद्भिः समनंतरोक्तऋक्सामोभयलक्षणाव्याप्तानि कर्मसु मंत्रत्वेन विनियुक्तानि यजूंषि ज्ञेयानि। न पादबद्धानि न च गीतिविशिष्टानीत्यर्थः।।१८।।

**संबुद्धिरूपा निगदा यजुरन्तर्गता अपि।**
**ब्राह्मणं त्रिविधं तत्र प्रथमं विधिरूपकम्।।१९।।**

'अग्नीदग्नीन् विहर' इत्याद्याः संबुद्धिरूपाः प्रैषात्मिका निगदा अपि यजुष्वेवांतर्भूता ज्ञातव्याः। एवं त्रिविधमंत्राणां लक्षणमुक्त्वा ब्राह्मणभेदमाह- ब्राह्मणमिति। त्रिप्रकारं ब्राह्मणमुद्देशमात्रेण दर्शयति- तत्रेति। त्रिविधमध्ये इत्यर्थः। प्रथमं विधिरूपम्।

**द्वितीयमर्थवादाख्यं तृतीयं तद्विलक्षणम्।**
**भाट्टा आहुर्विधिं शब्दभावनां च नियोगकम्।।२०।।**
**प्राभाकरास्तार्किकाद्या इष्टसाधनतेति च।**
**उत्पत्तिरधिकारश्च विनियोगः प्रयोगकः।।२१।।**

द्वितीयमर्थवादरूपम्। तृतीयं विध्यर्थवादोभयविलक्षणमिति। अथ विध्यादीनां लक्षणं विवक्षुः प्रथमं तावत् विध्यभिधेये विप्रतिपत्तिं दर्शयति- भाट्टा इति। एतत्संज्ञा मीमांसकविशेषाः शब्दभावनां प्रवर्तनारूपामेव विधिमाहुः। प्राभाकरास्तु प्रेरणापरपर्यायं नियोगमेव विधिमाहुः। तार्किकाद्यास्तु इष्टसाधनताज्ञानेन प्रवृत्तिर्भवतीति इष्टसाधनतामेव विधिमाहुः। पुरुषप्रवृत्त्यनुकूलः शब्दस्य व्यापारविशेषः शाब्दी भावना। नियोगः प्रेरणा, अपूर्वमिति यावत्। इदं कर्म ममेष्टसाधनमिति ज्ञानविषयीभूता इष्टसाधनता। सा च बलवदनिष्टाननुबंधित्वज्ञानकृतिसाध्यत्वज्ञानसहकृता पुरुषं कार्ये प्रवर्तयति अन्यतराभावे तु न प्रवर्तयति। इष्टसाधनत्वज्ञाने सत्यपि मधुरविषान्नभोजने चंद्रमंडलस्थामृतग्रहणादौ च पुरुषप्रवृत्तेरदृष्टत्वात् इति तार्किकमतम्। तच्च लिङ्गादेः शक्तित्रयकल्पनायां गौरवप्रसंगात् बलवदनिष्टाननुबंधित्वज्ञानाभावेऽपि बलवदनिष्टानुबंधित्वज्ञानाभावमात्रेण इष्टसाधनत्वज्ञानादिनैव प्रवृत्तेरनुभवसिद्धत्वान्न समंजसम्। किं तु प्रेरणापरपर्यायो व्यापारविशेष एव लिङ्गाद्यर्थः स एव विधिः 'अनन्यलभ्यः शब्दार्थ' इति न्यायादित्याद्यन्यत्र विस्तरः। स च विधिश्चतुर्विधः। उत्पत्तिविधिरधिकारविधिर्विनियोगविधिः प्रयोगविधिश्चेति भेदात्। 'संध्यामुपासीत' 'सोमेन यजत' इत्यादिकर्मस्वरूपद्रव्यदेवतातत्संबंधादिविधायकं विध्यंतरशेषिभूतं वाक्यजातमुत्पत्तिविधिः। 'अग्निहोत्रं जुहुयात् स्वर्गकामः' 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादि कर्मगुणादिजन्यफलस्वाम्यबोधकं वाक्यजातमधिकारविधिः। श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यारूपैः सहकारिप्रमाणैरंगप्रधानसंबंधबोधको विधिर्विनियोगविधिः। एवं विनियोगविधिनांगत्वे ज्ञाते श्रुत्यर्थपाठस्थानमुख्यप्रवृत्याख्यैः षड्भिः प्रमाणैः प्रधानानामंगानां च क्रमबोधको विधिः प्रयोगविधिः।।२०।।२१।।

**एवं चतुर्विधो ज्ञेयो विधिर्ज्ञातुरभीष्टदः।**
**देवताकर्मस्वरूपमात्रबोधक एव यः।।२२।।**

उद्देशमात्रेण विधिभेदमभिधाय तल्लक्षणानि वक्तुमाह- एवमिति। उक्तप्रकारेण चतुर्विधो विधिर्ज्ञातव्यः। स च ज्ञातुरभीष्टं ददाति। यतो विधिज्ञो विधेरभीष्टसाधनतां बुध्वा

विध्युक्ते कर्मणि इष्टसाधने प्रवर्तते, तेन च यथाविध्यनुष्ठितेनाभीष्टसिद्धिर्भवति। अन्यथा तु तत्सिद्ध्यभावः, तदुक्तं यः 'शास्त्रविधिमुत्सृज्य' 'तस्माच्छास्त्रं प्रमाणं ते' इत्यादि। उत्पत्तिलक्षणमाह- देवतेति। येन हि यागदानहोमादिरूपं कर्मस्वरूपमात्रं प्रमाणांतराप्राप्तं ज्ञाप्यते विधीयत इति यावत्, स उत्पत्तिविधिरित्युत्तरेण संबंधितः।।२२।।

**आग्नेयोष्टाकपालो हीत्यादिरुत्पत्तिरुच्यते।**

**सेतिकर्तव्यताकस्य करणस्याधिकारकः।।२३।।**

**यागादेः फलसंबंधबोधकस्तदुदाहृतिः।**

**स्वर्गकामो दर्शपूर्णमासाभ्यां यजतीति हि।।२४।।**

लक्षणभिमाधाय तदुदाहरणामाह- 'आग्नेयोऽष्टाकपाल' इति। अस्मिन् वाक्ये देवतातद्धितांताग्निपदेनाष्टाकपालपदेन च अष्टसु कपालेषु संस्कृतः पुरोडाशोऽग्निदेवतोद्देशेन पौर्णमास्याममावास्यायां च विहितः; द्रव्यदेवते यागस्वरूपमित्युक्तत्वात्तदुभयविधायकतया यागविधायकत्वेनास्य वाक्यस्योत्पत्तिविधित्वम्। आदिना 'अग्निहोत्रं जुहोति' 'सोमेन यजत' 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इत्यादिवाक्यान्युदाहर्तव्यानि। अथाधिकारविधिलक्षणमाह- सेतीति। प्रयाजानुयाजादि- कर्तव्यतायुक्तस्य करणस्य स्वर्गाद्यभीष्टफलसाधनस्य यागादेः; आदिना दानहोमादेर्धर्मस्य फलबंधसंबोधकः; अस्य कर्मण एतत्फलं अस्य चायं भोक्तेति कर्मजन्यफलभोक्तृत्वरूपसंबंधज्ञापको विधिरधिकारविधिः। तत्रोदाहरणमाह- स्वर्गकाम इति। 'दशपूर्णमासाभ्यां स्वर्गकामो यजेत' इति स्वर्गमुद्दिश्य दर्शपूर्णमासौ यागौ विदधताऽनेन वाक्येन स्वर्गकामस्य यागकर्तुः यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। तस्मादयमधिकारविधिः। एवं 'यजेत स्वर्गकामः' 'उद्भिदा यजेत पशुकाम' इत्यादिषु बोध्यम्।।२३।।२४।।

**विनियोगोऽङ्गसंबन्धबोधकस्तदुदाहृतिः।**

**समिधो यजतीत्यादिः प्रयोगश्च चतुर्थकः।।२५।।**

विनियोगविधिं लक्षयति विनियोग इति। शेषत्वशेषित्वापरपर्यायां- गत्वप्रधानत्वबोधको विधिर्विनियोगविधिः। यथा व्रीहीन् प्रोक्षतीत्यत्र व्रीहीनिति द्वितीयाश्रुत्या प्रोक्षणस्य व्रीह्यंगत्वम्। व्रीहीभिर्यजेतेति तृतीयाश्रुत्या यागांगमित्यादि। तदोदाहरणं समिधो यजतीति। दर्शपूर्णमासप्रकरणे तावत् 'समिधो यजति' इत्यादिप्रयाजाख्ययागविधानं श्रूयते। ततश्च समिदादिपंचयागैर्भावयेदित्यवगम्यते।

अथोत्पद्यते किमेभिर्भावयेदित्युपकार्याकांक्षा। तथा तत्रैव प्रकरणे दर्शपूर्णमासवाक्ये ज्ञायते दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति; ततश्चोपपद्यत इतिकर्तव्याकाङ्क्षा कथं आभ्यां स्वर्गं भावयेदिति। यथा कुठारेण छिंद्यादित्युक्ते कथं कुठारेण छिंद्यात् उद्यमननिपातनाभ्यामितियावत्। एवं च परस्पराकांक्षात्मकप्रकरणेन फलवत्सन्निधावफलं तदंगमिति न्यायेन च प्रयाजानां दर्शपूर्णमासशेषत्वं विज्ञायते। तथाहि प्रयाजानुयाजादीतिकर्तव्यतां संपाद्य दर्शपूर्णमासयागाभ्यां स्वर्गं भावयेदिति। ननु न यागादीनां स्वर्गसाधनत्वं, स्वर्गस्य कालांतरभावित्वादपूर्वमंतरेण तन्निष्पादकत्वासंभवात्। न च यागादीनामपूर्वनिष्पादकत्वं, सिद्धस्यैव साध्यनिष्पादकत्वदर्शनात् साध्यस्वरूपस्य यागदानादेस्तन्निष्पादकत्वासंभवात्। तस्मान्न यागादेः स्वर्गसाधनत्वं, नच तदुद्देशेन यागादिविधिर्युक्त इति चेन्न। न हि सिद्धमपि द्रव्यादि क्रियामंतरेण फलं निष्पादयति। न हि पचिक्रियामंतरेण काष्ठस्थाल्यादीनामोदनसाधनत्वं दृश्यते। तस्मात्साध्यस्यापि यागादेर्भावनाकरणस्य स्वसाधननिष्पादितस्यापूर्वद्वारा भावनाभाव्यस्वर्गनिष्पादकत्व-मस्त्येव। स्यादेतत्। यदि यागादिनाऽपूर्वमुत्पद्येत, तदेव नोत्पद्यते, फलवाक्येन तावत् यागादेः फलसाधनत्वं बोध्यते नापूर्वसाधनमिति चेन्न। आशुतरविनाशिनां कर्मणां कालांतरभाविस्वर्गसंबंधासंभवात् श्रुतेश्चाबाधितप्रामाण्यादपूर्वस्यावश्यं कल्पनीयत्वात्। तच्चापूर्वमनेकविधं, फलापूर्वं समुदायापूर्वमुत्पत्त्यपूर्वमंगापूर्वं चेति। तत्र येन स्वर्गः क्रियते तत्फलापूर्वमित्युच्यते फलजनकत्वात्, तदेव परमापूर्वम्। तच्च समुदायापूर्वेण जन्यते। समुदायस्तु दर्शपूर्णमासयोर्द्विविधः, अमावास्यायां यागत्रयरूप एकः पौर्णमास्यां तद्रूपो द्वितीयः। तज्जन्यमपूर्वं समुदायापूर्वं; समुदाययोर्भिन्नकालवर्तित्वेन फलापूर्वजननाय तस्यावश्यं कल्पनीयत्वात्। समुदायस्त्वमावास्यायां 'ऐंद्रं दधि' 'ऐंद्रं पयः' 'आग्नेयोष्टाकपाल'श्चेति यागत्रयात्मकः। पौर्णमास्यायां तु आग्नेयाष्टाकपालाग्नीषोमीयैकादशकपालोपांशुयाजेति यागत्रयात्मकः। एतेषामपि भिन्नक्षणवर्तिनां समुदायापूर्वजननाय त्रीणि त्रीणि उत्पत्त्यपूर्वाणि कल्प्यन्ते। तेषामप्यंगोपकारमंतरेणानिष्पत्तेरंगानां चानेकक्षणवर्तित्वात् संहत्योत्पत्त्यपूर्वारंभायोगा-दंगापूर्वाणि कल्प्यन्ते। एवं च सन्निपत्योपकारकैरवघातादिभिरंगैरंगापूर्वं जन्यते, तेन च यागोत्पत्त्यपूर्वं ततः समुदायापूर्वद्वारा फलापूर्वम्। आरादुपकारकैस्तु प्रयाजादिभिः साक्षात्फलापूर्वमेव, तदेव महापूर्वमित्युच्यते। तेनैव कालांतरेऽपि फलमुत्पद्यत इति यागादीनां स्वर्गादिफलसंबंधोपपत्तिः। विस्तरोऽन्यत्र द्रष्टव्यः। अथ चतुर्थप्रयोगविधिलक्षणमाह- प्रयोगश्चेति।।२५।।

## अङ्गप्रधानाख्यकर्मप्रयोगैक्यावबोधकः।
## विधित्रयान्वितः श्रौतमूचुः कल्पं च केचन।।२६।।

अंगकर्मणां प्रधानकर्मणां चानुष्ठानक्रमं श्रुत्यादिभिर्बोधयन्नंगापूर्वोत्पत्त्यपूर्व-समुदायापूर्वफलापूर्वक्रमेण फलभावसाधनीभूतमंगप्रधानसाहित्यं येन प्रतिपाद्यते स प्रयोगविधिरित्युच्यते। यतोऽगप्रधानयोर्नियतक्रममंतरेणाविलंबापरनामधेयप्रयोगप्राशुभावो नोपपद्यते, तस्मात् स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि प्रयोगविधिरेव विधत्ते। सोऽयं प्रयोगविधिः प्रयाजाद्यंगजातवाक्यैकवाक्यतया महावाक्यतामापन्नो दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादि प्रधानविधिरेवोक्तविधित्रयमेलनरूपश्चतुर्थोऽयं विधिर्न तु विध्यंतरमित्यभिप्रेत्याह- विधित्रयान्वित इति। स च श्रौत इति केचित्। कल्पसूत्रमित्यन्ये। अस्योदाहरणं तु 'वेदं कृत्वा वेदिं करोति' 'वषट्कर्तुः प्रथमभक्ष' इत्यादि। पुनरपि विधिस्त्रिविधः। अपूर्वनियमपरिसंख्याभेदात्। 'विधिरत्यंतमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते' इति। अस्यार्थः 'संध्यामुपासीत' इत्यादिरत्यंताप्राप्तसंध्यादिविधायकोऽपूर्वविधिः। 'व्रीहीनवहन्ति' इत्यादिर्नखविदलनादिना तंडुलकरणपक्षेऽप्राप्तमवघातं नियमेन विधत्ते, अवघातनिष्पन्नैरेव तंडुलैर्यष्टव्यमिति पाक्षिकाप्राप्तनियामको नियमविधिः। 'पंच पंचनखा भक्ष्या' इत्यत्र विहितपंचनखभक्षणं भक्षणविधिसत्त्वे विधिप्राप्तं, असत्त्वेऽपि कामतः प्राप्तं, तस्मादपार्थकोऽयं विधिरपंचनखभक्षणं निवर्तयति सार्थकतायै। इयमेव परिसंख्या। सा पुनर्द्विविधा, श्रोती लाक्षणिकी चेति। 'अत्र ह्येवावपंति' इत्यत्रैवकारश्रवणाच्छ्रौती। 'पंच पंचनखा भक्ष्या' इत्यत्र तदश्रवणाल्लाक्षणिकी। इत्येवं निरूपितो विधिः।।२६।।

## इमं विद्वान् तथा कर्मस्वरूपं फलभाग् भवेत्।
## कर्मस्वरूपं द्विविधं गुणकर्मार्थकर्म च।।२७।।

इममिति। एतद्विधिचतुष्टयं यथायथमुक्तप्रमाणैर्विदित्वा तथा वक्ष्यमाणं कर्मस्वरूपं च विदित्वा यः कर्म कुर्यात्स कर्ता तस्य कर्मण उक्तफलभाग् भवेत्। कर्मस्वरूपं कीदृगित्याह- द्विविधमिति। गुणकर्मार्थकर्म चेति द्विविधम् कर्म। यागाद्युपयुक्ते उपयोक्ष्यप्रमाणे वा द्रव्यदेवतादौ संस्कारजनकं यद्विहितं तद्गुणकर्म। स च संस्कारश्चतुर्विधोऽग्रे वक्ष्यते। आत्मसमवेतसंस्कारजनकं नित्यनैमित्तिककाम्यरूपमर्थकर्म। आरादुपकारकमंगमप्यर्थकर्मैव।।२७।।

**क्रतुकारकयुक्तं यद्विहितं गुणकर्म तत्।**
**चतुर्धोत्पत्तिविकृतिसंस्कृतिप्राप्तिभेदतः।।२८।।**

गुणकर्मणो लक्षणमाह- क्रत्विति। क्रतोः कारकाणि द्रव्यदेवतादीनि, तद्युक्तं तदुद्देशेन विहितं यत्तद्गुणकर्मेत्यर्थः। यथा क्रतुविनियुक्तव्रीहिषु प्रोक्षणावघातादि। तच्चतुर्धा, उत्पत्त्याप्तिविकृतिसंस्कृतिभेदात्।।।२८।।

**यूपं तक्षत्यादधीत वसन्तेऽग्नीनितीह तु।**
**तक्षणाधानसंस्काराख्यविशेषविशिष्टता।।२९।।**
**यूपाग्न्यादेः स्मृतोत्पत्तिरेवमुन्नेयमन्यतः।**
**सोमं सुनोति व्रीहींश्चावहन्ति विकृतिस्त्विह।।३०।।**

तत्र क्रमेणोदाहरणान्याह- यूपमिति। 'यूपं तक्षति' 'वसंतेऽग्नीनादधीत' इत्येवमावादिवाक्यविहिता उत्पत्तिस्काराः। यस्मात्तक्षणसंस्कारेण यूप उत्पद्यते। एवमाधानसंस्कारेण तत्संस्कारविशिष्टा आहवनीयादयोऽग्नय उत्पद्यन्ते पूर्वमसन्तः, तस्मादयमुत्पत्तिसंस्कारः। एवं यत्र यत्र संस्कारविशिष्टोत्पत्तिर्विधीयते तत्र तत्रोत्पत्तिसंस्कारत्वं बोध्यम्। विकृतिकर्मोदाहरति- सोममिति। इह तु 'सोमं सुनोती'ति वाक्येन विहितस्य सोमाभिषवस्य विकृतिसंस्कारत्वम्। तस्य रसरूपविकृतिजनकत्वात्। एवं 'व्रीहीनवहन्ती'ति विहितावहनेन व्रीहीणां वैतुष्यरूपा विकृतिर्भवति, तस्मादयं विकृतिसंस्कारः। एवमन्यत्रापि।।२९।।३०।।

**तयोः क्रमादभिषवावघाताभ्यां प्रकीर्तिता।**
**व्रीहीन् प्रोक्षति पत्न्याज्यं वीक्षते त्विह चानयोः।।३१।।**

तयोरिति। अथ संस्कृतिकर्मोदाहरति व्रीहीनिति। अत्र व्रीहीन् प्रोक्षतीति विहितप्रोक्षणेन न व्रीहीणां स्वरूपोत्पत्तिः, न विकृतिः, न चाप्राप्तानां प्राप्तिः। तस्मादनेन व्रीहिगतातिशयरूपः संस्कार एवोत्पद्यत इति कल्प्यते। अत एवास्य संस्कृतित्वम्। एवं 'पत्न्याज्यं वीक्षत' इति विहितपत्नीकर्तृमाज्यावेक्षणमपि संस्कृतिरेव। एवं सर्वत्र।।३१।।

**प्रोक्षणेक्षणतः प्रोक्ता विशिष्टा संस्कृतिः खलु।**
**गां पयो दोग्धि स्वाध्यायोऽध्येतव्योऽत्राप्तिरुच्यते।।३२।।**

अथाप्तिमुदाहरति गामिति। येन कर्मणा विद्यमानमेव वस्तु प्राप्यते तदाप्तिकर्म। यथा गां पयो दोग्धीति विहितदोहनेनाप्राप्तस्य गवि विद्यमानस्य पयसः प्राप्तिर्भवति।

एवमेव 'स्वाध्यायोऽध्येतव्य' इति विहिताध्ययनेन गुरौ विद्यमानस्य स्वेनाप्राप्तस्याध्यायस्यावाप्तिर्भवति। तस्माद्दोहनाध्ययनादिः प्राप्तिसंस्कारः। अत्र च प्रोक्षणादिकं क्रत्वंगं गुणकर्म, क्रतुप्रयुक्तत्वात्। आधानमध्ययनं च स्वतंत्रं न तु क्रत्वंगमिति ज्ञेयम्।।३२।।

**दोहनाध्ययनाभ्यां च पयआदेः सतो मता।**
**एतच्चतुष्टयं त्वङ्गमङ्गिनः कथितं क्रतोः।।३३।।**

दोहनेति। सतो विद्यमानस्य। एतदिति। उक्तमुत्पत्त्याप्तिविकृतिसंस्कृत्यात्मकं चतुर्विधं गुणकर्म, अंगिनः शेषिभूतस्य यज्ञस्यांगं शेषभूतम्। अथ एवास्य गुणकर्मेति संज्ञा। गुणकर्मणि द्रव्यस्य प्राधान्यं द्रव्ये च कर्मणो गुणत्वम्। यथा प्रोक्षति, अवहंतीत्यादौ द्वितीयया व्रीहीणां क्रियासाध्यत्वप्रतीतेः क्रियापेक्षया द्रव्यस्य प्राधान्यम्। प्रोक्षणावघातादिक्रियायास्तदपेक्षया गुणत्वम्। इदमेवाश्रयिकर्मेत्युच्यते, द्रव्यदेवताश्रयेण तिष्ठतीति। आश्रयद्वारा क्रतूपकारकत्वादेव सन्निपत्योपकारकमपि।

**यत्कारकाण्यनाश्रित्य विहितं चार्थकर्म तत्।**
**अङ्गं प्रधानमिति च द्विविधं परिकीर्तितम्।।३४।।**

अर्थकर्मणो लक्षणमाह यदिति। द्रव्यदेवताक्रतुकारकाण्यनाश्रित्य यद्विहितं तदर्थकर्मेत्यर्थः। अर्थकर्मणि हि द्रव्यापेक्षया कर्मणः प्राधान्यं, कर्मणि द्रव्यस्य गुणत्वम्। तच्च कर्म नित्यनैमित्तिककाम्यभेदेन त्रिविधम्। 'यावज्जीवमग्निहोत्रं जुहोति' 'सायं जुहोति' 'प्रातर्जुहोति' इति जीवता पुरुषेण सायंप्रातःकालयोर्नियमेन कर्तव्यतया अवगतमग्निहोत्रदिकं नित्यम्(१) दर्शपूर्णमासयोः कालातिपाते 'सोऽग्नये पथिकृतेऽष्टाकपालं पुरोडाशं निर्वपेत्' इति दर्शपूर्णमासकालातिपत्त्यादिनिमित्तकपथिकृदिष्ट्यादिकं नैमित्तिकम्(२) राजसूयेन स्वाराज्यकाम इत्यादिविधिविहितं काम्यम् (३) तदपि त्रिविधम्। ऐहिकफलकम्, आमुष्मिकफलकम् ऐहिकामुष्मिकफलकं चेति भेदात्। तत्राद्यं कारीर्यादि, तत्तु तत्समयवर्तिशुष्यत्सस्यजीवनहेतुवृष्टिकामेन क्रियते, न कालांतरभाविवृष्टिकामेन जन्मांतरीयवृष्टिकामेन वा। द्वितीयं स्वर्गाद्यर्थं क्रियमाणं ज्योतिष्टोमादिकं, स्वर्गस्येहलोके भोग्यत्वाभावात्। तृतीयमैहिकामुष्मिकसाधारणफलकं तु 'वायव्यं श्वेतमालभेत भूतिकाम' इत्यादिना विहितम्। विस्तरस्त्वन्यतो द्रष्टव्यः। तत्र नित्यनैमित्तिकयोरकरणे प्रत्यवायः, कृते फलं नास्तीति केचित्। दुरितनिवृत्तिः फलमित्यन्ये, 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षय'मिति दुरितनिवृत्तेः फलत्वेन

श्रूयमाणत्वात्। ननु फलवत्त्वे तयोरपि काम्यत्वापात इति चेन्न। फलकामनापूर्वकमनुष्ठानाभावात्, तत्तद्विधिवाक्ये फलकाममुद्दिश्य तदर्थफलसाधनत्वेन विधानाभावाच्च काम्यत्वाननुपपत्तेः। अर्थकर्मणो द्वैविध्यमाह- तदिति। तत् अर्थकर्म, अंगं शेषभूतं प्रयाजादि, प्रधानं शेषिभूतं दर्शपूर्णमासादि चेति द्विविधम्। अत्र हि दर्शपूर्णमासादेः प्रयाजादि अंगं, दर्शपूर्णमासाद्यर्थं तत्प्रवृत्तत्वात्। दर्शादिकं त्वंगि, अनन्यार्थप्रवृत्तेः।।३४।।

**अनन्यार्थं प्रधानं चान्यार्थमङ्गं च तद्द्विधा।**
**सन्निपत्योपकार्यारादुपकारकभेदतः।।३५।।**

द्विविधस्यापि लक्षणमाह- अनन्यार्थमिति।कर्मणा येन कर्मांतरसिद्धिर्न भवति, किंतु कर्मांतरैरेव यस्य सिद्धिस्तत्प्रधानं, यथा दर्शपूर्णमासादि। प्रयाजानुयाजादिभिर्हि दर्शपूर्णमाससिद्धिः। न हि दर्शपूर्णमासाभ्यामन्यत्कर्म साध्यम् किं तु फलापूर्वमेव। तेन फलापूर्वजनकं प्रधानमिति तात्पर्यम्। प्रधानकर्मणि फलापूर्वजननसामर्थ्यो-न्मुखीकरणत्वात्, फलापूर्वे वा अतिशयजनकत्वात्प्रयाजादीनां तदंगत्वम्। एतदेवा-न्यार्थत्वं, पारार्थ्यमिति यावत्। केवलप्रयाजाद्युद्दिश्य कस्यचिदपि पुरुषास्याप्रवृत्तेः। दर्शाद्युद्दिश्य प्रवृत्तः पुरुष एव प्रयाजादीननुतिष्ठति। तस्मात्तेषामंगत्वम्। अंगानां द्वैविध्यमाह- सन्निपत्योपकारकमारादुपकारकं चेति भेदाद्द्विविधमंगम्। एतदेव गुणकर्म प्रधानकर्म चेति क्रमेण व्यवह्रियते।।३५।।

**आद्यं प्रधानस्वरूपनिर्वाहकमिति स्मृतम्।**
**संप्रोक्षणावघातादि फलोपकार्यथापरम्।।३६।।**

ते क्रमेण लक्षयति आद्यमिति। संप्रोक्षणावघातादिभिः संस्कृतव्रीह्यादीनां प्रधानयागस्वरूपं निष्पाद्यते; अतस्तादृशं साक्षात्परंपरया वा फलसाधनयागशरीरं निष्पाद्य तद्द्वारा तदुत्पत्त्यपूर्वोपयोगि आद्यं सन्निपत्योपकारकमित्यर्थः। कर्मांगद्रव्याद्युद्देशेन विधीयमानं कर्मेति तात्पर्यम्। तच्च त्रिविधं; दृष्टार्थं, अदृष्टार्थं, दृष्टादृष्टार्थं चेति। अवघातादि दृष्टार्थम्। प्रोक्षणादि अदृष्टार्थम्। पुरोडाशादि दृष्टादृष्टार्थं, तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। अथापरं- द्वितीयं फलोपकारि, यद्यागजन्यफलायैवोपयुज्यते तदारादुपकारकमित्यर्थः। सन्निपत्योपकारकं तु यद्यपि यागफलोपयोगि तथापि यागस्वरूपेऽप्युपयुज्यते द्रव्यदेवतासंस्कारद्वारा। द्रव्यदेवते यागस्वरूपमित्यभ्युपगमात्। अत एवास्य गुणकर्मत्वम्। आरादुपकारकाणां प्रयाजादीनां तु

प्रधानकर्मत्वम्। आत्मसमवेतापूर्वजनकत्वात्। सन्निपत्योपकारकं पुनर्द्विविधं, उपयुक्तसंस्कारकमुपयोक्ष्यमाणसंस्कारकं च। तत्राद्यमिडाभक्षणं, उपयुक्तस्य पुरोडाशादेः संस्कारकत्वात्। तदेव प्रतिपत्तिकर्मेत्युच्यते। प्रतिपत्तिरपि त्रिधा; प्रधानोत्तरकाला, प्रधानसमकाला, प्रधानपूर्वकाला चेति। आद्या इडाभक्षणाद्या। द्वितीया चतुरवत्तहोमादिका। तृतीया तु 'लोहितं निरस्यति' 'शकृत्संप्रविध्यति' इत्याद्युक्ता। प्रोक्षणादिकं तु द्वितीयं, यागे व्रीहीणामुपयोक्ष्यमाणत्वात्। तदपि त्रिविधं; साक्षाद्विनियुक्तसंस्कारकं, साक्षाद्विनियुक्तस्य यदुपकारकं तत्संस्कारकं, विनियोक्ष्यमाणसंस्कारकं च। तत्राद्यं व्रीह्यवहननादि, व्रीहिभिर्यजेतेति व्रीहीणां विनियुक्तत्वात्। वत्सालंभनादि द्वितीयं, दोहनांगत्वेन साक्षाद्विनियुक्ताया गोरुपकारकवत्ससंस्कारकत्वात्। तप्ते पयसि दध्यानयनं तृतीयं, 'सा वैश्वदेव्यामिक्षे'ति वाक्ये तच्छब्देन विनिर्देशस्य वैश्वदेवयागाङ्गत्वेन विनियोक्ष्यमाणस्य पयसः संस्कारकत्वात्। क्वचिदुपयुक्तोपयोक्ष्यमाणोभयं, यथा पशुपुरोडाशयागः, तत्संस्कार्यदेवताया वपायागे उपयुक्त्वात्, हृदयाद्यंगयागेषूपयोक्ष्यमाणत्वात्, इत्यादिविस्तरोऽन्यत्र।।३६।।

**प्रयाजाद्येवं पूर्णाङ्गयुद्विधिः प्रकृतिर्मता।**
**दर्वीहोमस्तदुभयविलक्षणविधिर्मतः।।३७।।**

आरादुपकारकस्योदाहरणं प्रयाजादिति। प्रकृतिविकृतिलक्षणमाह- एवमिति। यत्र समग्रांगोपदेशः सा प्रकृतिर्यथा दर्शपूर्णमासादिः; तत्प्रकरणे सर्वांगपाठात्। अनेनैव विकृतिलक्षणं सूचितम्, यत्र न सर्वांगोपदेशः सा विकृतिरिति। यथा सौर्यादिः, तत्र कतिपयांगानामतिदेशेन प्राप्तत्वात्। कश्चित् प्रकृतिविकृत्युभयविलक्षणो विधिः, यथा दर्वीहोमः, न ह्ययं कस्यापि विकृतिभूतः। न चास्यापि काचिद्विकृतिर्दृश्यते येनास्य प्रकृतित्वं स्यात्, तस्मादुभयलक्षणोऽयं विधिः।।३७।।

**त्रिधार्थवादोऽत्र विधिशेषभूतं हि वाक्यकम्।**
**प्रमान्तरविरुद्धार्थबोधको गुणवादकः।।३८।।**

एवं प्रतिज्ञातत्रिविधब्राह्मणमध्ये प्रथमं विधिरूपं उद्देश्यलक्षणतो विभज्य द्वितीयमर्थवादरूपं विभज्यते- त्रिधेति चतुर्भिः। अत्र ब्राह्मणात्मके वेदे विधिवाक्यशेषभूतं विधिप्रशंसादिपरं वाक्यमर्थवादसंज्ञम्। विधिरित्युपलक्षणं निषेधस्यापि, अतस्तच्छेषोऽप्यर्थवादः। तेन प्राशस्त्यनिंदान्यतरपरं वाक्यमर्थवाद इति फलितम्। तस्य प्रयोजनं क्रमेण विधेयप्राशस्त्यं निषेध्यनिंदा च। सकलवेदाध्ययनं कर्तव्यमिति बोधयता

'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधिना सर्ववेदस्य प्रयोजनवत्त्वं सूचयतोपात्तस्यार्थवादस्यानर्थक्यानुपपत्तेराम्नायस्य क्रियार्थत्वाच्च प्रशंसादिद्वारा विध्येकवाक्यतयास्य प्रयोजनवत्त्वं ज्ञेयम्। स्वार्थमात्रपरत्वे आनर्थक्यप्रसंगात्। स चार्थवादश्चतुर्विधः। प्रशंसानिंदापरकृतिपुराकल्पभेदात्। तत्राद्यो यथा, वायुर्वै क्षेपिष्ठा देवतेति वायव्यश्वेतविधिवेशेषः। 'बर्हिषि रजतं न देय'मिति निषेधस्य शेषभूतः सोरोदीदित्यादिनिंदारूपो द्वितीयः। अग्निर्वा अकामयेत्यादिस्तृतीयः. सोऽप्यग्निदेवत्ययागविधेः प्राशस्त्यं बोधयन् तच्छेषतां प्रतिपद्यते। पुरा ब्राह्मणा अभैषुरित्यादिरूपः पुराकल्पश्चतुर्थः, सोऽपि विधिविशेषभूतः अत एवास्य प्रामाण्यम्। एवं चतुर्विधोऽप्यर्थवादः पुनस्त्रिविधः, गुणवादानुवादभूतार्थवादभेदात्। तत्र गुणवादलक्षणमाह प्रमेति। प्रत्यक्षादिप्रमाणांतरविरुद्धार्थबोधकोऽर्थवादः गुणवादः, यथा प्रत्यक्षप्रमाणविरुद्धो यजमानप्रस्तरयोरभेदो 'यजमानः प्रस्तरः' इत्यनेन बोध्यते, अतोऽयं गुणवादः। तदुक्तं 'विरोधे गुणवादः स्या'दिति।।३८।।

**आदित्यो यूप इत्यादिर्द्वितीयस्त्वनुवादकः।**
**प्रमान्तराप्तार्थबोधी यथाऽग्निर्हिमभेषजम्।।३९।।**

तत्रोदाहरणमाह आदित्य इति। अत्र हि यूपस्यादित्यत्वम् प्रत्यक्षविरुद्धम्। तस्य चाक्रियार्थत्वेन प्रयोजनाभावाच्चाप्रामाण्ये प्राप्ते, स्वाध्यायविध्यवगताखिलवेदा-प्रामाण्यानुपपत्तेर्यूपस्यादित्यत्वेनेह प्रशंसादर्शनाद्यूपविधायकवाक्येनैकवाक्यतया यूपविधि-विशेषत्वेन क्रियार्थतया सप्रयोजनत्वेन प्रामाण्यम्। न च प्राशस्त्यादिबोधस्य निष्प्रयोजनत्वेनार्थवादस्यानर्थक्यम्। आलस्यादिवशादप्रवर्तमानस्य पुंसः प्रवृत्त्यादिजनकत्वेन तद्बोधस्योपयोगात्। एवं गुणवादमुक्त्वा द्वितीयमनुवादमाह- द्वितीय इति। प्रमाणांतरावगतमर्थं बोधयति योऽर्थवादः सोऽनुवादः। तदुक्तं- 'अनुवादोऽवधारितः' इति। उदाहरणमाह- अग्निर्हिमस्य भेषजमिति। अत्र हिमविरोधित्वमग्नौ प्रत्यक्षावगतं, अतोऽस्यानुवादत्वम्।।३९।।

**मानान्तरविरोधाप्तिविहीनो गुणबोधकः।**
**भूतार्थवाद इन्द्रोऽस्त्र वृत्राय प्राहिणोदिति।।४०।।**

अथ भूतार्थवादलक्षणम्। मानांतरविरोधो गुणवादलक्षणम्, मानंतरप्राप्तिरनुवादलक्षणम्। तदुभयविहीनो गुणबोधकः कर्मप्राशस्त्यबोधकोऽर्थवादो भूतार्थवादः। तत्रोदाहरणम्- इंद्र इति। अत्र श्रुतिः 'इंद्रो वृत्राय वज्रमुदयच्छत्' इति। अत्र

वृत्रं प्रति इंद्रवज्रोद्यमनाभावावगाहिप्रमाणांतरस्यादर्शनान्न तद्बोधने प्रमाणांतरविरोधः। नापि प्रमाणांतरावगतार्थप्रतिपादकत्वम्। तत्सद्भावप्रतिपादकप्रमाणांतरस्यादर्शनात्।।४०।।

**विधिस्तुतिपरत्वे तु समानेऽपि तृतीयकः।**
**देवाधिकरणन्यायात्स्वतःप्रामाण्यरूपकः।।४१।।**

तत्र यद्यपि गुणवादस्य प्रत्यक्षादिविरुद्धार्थप्रतिपादकत्वात्, अनुवादस्य चावगतप्रतिपादकत्वात् तयोः स्वाध्यायविध्यवगतवेदस्यानर्थक्यानुपपत्तेर्विध्येकवाक्यतया प्रामाण्यसत्त्वे स्वार्थेऽप्रामाण्यं तथापि भूतार्थवादस्य न तथात्वम्। तस्य केवलस्याप्रयोजनत्वात्। विधिस्तावकत्वेऽपि प्रमाणांतरविरोधाभावाद्बादरायणोक्त-देवताधिकरणन्यायाच्च स्वार्थे निर्बाधं प्रामाण्यमित्याह- विधिस्तुतीति। यद्यपि त्रयाणामप्यर्थवादानां स्वार्थप्रतिपादने प्रयोजनाभावात्तस्य चानभ्युगतत्वात् विधिशेषतया विधेयस्तुतिपरत्वमविशिष्टं तथापि तृतीये भूतार्थवादे अप्रामाण्यकारणविरहाद्वेदे च स्वतःप्रामाण्यस्याबाधितत्वादस्त्येव स्वार्थविषयकमपि प्रामाण्यम्। वेदस्य स्वतःप्रामाण्यं तावत् पूर्वतंत्रे द्रष्टव्यम्। भूतार्थवादस्य त्वप्रामाण्यं संदिह्य निरस्तं बादरायणेन देवताधिकरणे।।४१।।

**त्रय्या हौत्रादिभेदेन प्रयोगास्त्रिविधा मताः।**
**यज्ञानुपयुक्तोऽप्यथर्वा शान्त्यादिबोधकः।।४२।।**

एवं मंत्रब्राह्मणात्मकद्विविधभेदस्य प्रयोजनमभिधाय तस्यैव पुनर्ऋग्यजुःसामात्मकत्रिविधभेदभिन्नस्य प्रयोजनमाह- त्रय्येति। श्रौतकर्मणि त्रिविधाः प्रयोगाः, हौत्रमाध्वर्यवमौद्गात्रमिति, तत्र होतृसंज्ञेन ऋत्विजा ऋग्वेदोक्तं कर्मानुष्ठीयते शस्त्रशंसनयाज्यानुवाक्यासामिधेनीप्रभृतिमंत्रपठनात्मकं तस्य हौत्रसंज्ञा। अध्वर्युणा याजुषं यागस्येतिकर्तव्यताप्रधानं कर्मानुष्ठीयते हविःकरणादिकं तस्याध्वर्यवसंज्ञा। उद्गात्रा तु स्तोत्रपठनादिकं सामगानात्मकमनुष्ठीयते सामवेदोक्तं, तस्यौद्गात्रसंज्ञा। तुदक्तमृचा 'ऋचां त्वः पोषमास्ते..उत्व' इति। अत्र 'इति ऋत्विक्कर्मणां विनियोगमाचष्ट' इत्यादियास्कः। नन्वस्यामृचि चत्वार ऋत्विज उक्ताः तत्र त्रयाणामेव कर्माणि तत्प्रतिपादका वेदाश्चोक्ताः, ब्रह्मणस्तु किमपि नोक्तम्। उच्यते। नायं दोषः, ब्रह्मणस्त्रैविद्यस्योक्तत्वात्। ऐतरेयब्राह्मणे 'अथ ब्रह्मत्वं केन क्रियत' इत्याशंक्य 'होत्राभिर्यज्ञो वाचा संस्क्रियते तस्मादर्धभाग्ब्रह्मे'त्युक्त्वा तस्य कर्तव्यत्वं 'त्रय्या विद्यये'त्युपसंहतम्। ननु त्रयाणामृत्विजां त्रयो वेदाः कर्म साधनत्वेनोक्ताः, चतुर्थस्य ब्रह्मणः कर्मसाधनाकांक्षायां अथर्ववेदस्य च

प्रयोजनाकांक्षायां परस्पराकाङ्क्षापूरकत्वेनाथर्ववेदो ब्रह्मकर्मण्युपयुज्यतामिति चेन्न। अथर्ववेदस्य श्रौतानुपयोगित्वात्, ब्रह्मणश्च द्रष्टृत्वेन वेदत्रयस्यावश्यकत्वात् तद्विधायकश्रुतिवचनाच्च। नन्वेवं चेदथर्वणः किं प्रयोजनमत आह- यज्ञेति। अथर्वा वैतानिकयज्ञादिकर्मस्वनुपयुक्तोऽपि शांतिपौष्टिकपूर्तादिकर्मणां बोधकत्वेन प्रयोजनवानिति।।४२।।

**शाखाभेदेऽपि कर्मैक्यं प्रतिवेदमिति स्थितिः।**
**वेदान्तवाक्यजातं विध्यर्थोभयविलक्षणम्।।४३।।**

ननु प्रतिवेदे बहव्यः शाखाः सन्ति। तासु च प्रतिशाखं भिन्नाः प्रयोगाः दृश्यन्ते। तेष्वेकवेदस्य निखिलशाखागतस्य कर्मणः एकेनर्त्विजा कर्तुमशक्यत्वात्, स्वाधीतशाखागतस्यासाकल्याच्च तदनुष्ठानेऽपि कर्मवैकल्यापत्तिरित्याशंक्य नेत्याह- शाखेति। प्रतिवेदं शाखाभेदेऽपि तदुक्तकर्मणामभेद एव। शब्दांतराभ्याससंख्यासंज्ञागुणनामधेयप्रकरणांतराणि कर्मभेदप्रतिपादकप्रमाणानि। तत्र शाखाभेदस्य प्रयोजकत्वं नास्ति। यथा यजति, ददातीत्यादौ शब्दांतरात्, 'समिधो यजति' 'तनूनपातं यजति' इत्यादौ अभ्यासात्, 'तिस्र आहुती'रित्यादौ संख्यया, 'अथैष ज्योतिरथैष विश्वज्योति'रित्यादौ संज्ञया, 'वाजिन'मित्यत्र गुणात्, 'उद्भिदे'त्यादौ नामधेयात्, 'मासमाग्निहोत्रं जुहोती'त्यादौ प्रकरणांतरात् कर्मभेदः। न ह्येवं शाखांतरात्कर्मभेदो दृष्टचरः। शाखांतराधिकरणे खल्वेकस्यां शाखायां अग्नीषोमीयस्यैकादशकपालत्वमपरस्यां द्वादशकपालकत्वमिति रूपभेदात्कर्मभेदं शंकित्वा, संख्ययोरेव विकल्पः, रूपभेदेऽपि कर्मभेदो नेति सिद्धांतितम्। कर्मैक्याद्गुणोपसंहारोऽपि तत्र तत्र दृश्यतेऽतः प्रतिवेदं शाखाभेदे सत्यपि कर्मैक्यं निर्विवादम्। एवं प्रतिज्ञातत्रिविधब्राह्मणे विध्यर्थवादरूपं द्विविधं प्रतिपाद्य, तद्विलक्षणं तृतीयं प्रतिपिपादयिषुस्तन्निर्दशति- वेदान्तेति। वेदान्ता वेदशिरोभागा उपनिषद्रूपास्तद्गतं सिद्धानुवादरूपत्वान्न प्रवृत्तिनिवृत्तिजनकम्। अनन्यशेषत्वान्न चार्थवादरूपम्। अत एवोक्तं विध्यर्थोभयविलक्षणमिति।।४३।।

**अज्ञातज्ञापकत्वेऽप्यनुष्ठानात्प्रतिपादनात्।**
**न विधिस्तत्स्वयं स्वार्थे ज्ञानानन्दपरात्मनि।।४४।।**

तदेव प्रतिपादयति- अज्ञातेति। सिद्धानुवादकत्वेऽप्यज्ञातस्य परब्रह्मणो ज्ञापकत्वात् एषां वाक्यानामव्याहतं प्रामाण्यम्। न चायं विधिः, कस्यापि कर्मानुष्ठानस्यानुक्तत्वात्। नाप्यर्थवादः, अनन्यशेषत्वात्। तदेवाह- तत् वाक्यजातं

स्वयमेव प्रमाणांतरानवलंबनेन ज्ञानानंदात्मके स्वप्रतिपाद्ये परमात्मनि स्वत:प्रामाण्यम्।।४४।।

**उपक्रमादिषड्लिङ्गबलवत्त्वेन च स्वतः।**

**प्रमाणभूतमप्यन्यान्सर्वानपि विधीन् स्वयम्।।४५।।**

तत्र कारणमाह उपक्रम इति। तात्पर्यनिर्णयलिंगैरुपक्रमादिभिर्निर्णीतस्वार्थस्य लिंगसामर्थ्येन बलवत्त्वाद्वेदस्याबाधितश्चत:प्रामाण्याच्च। षड्लिंगानि तु 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये' इति। तथाहि 'सदेवसोम्येदमग्र आसीत् ' इत्युपक्रम्य, 'तदैक्षत' इत्याध्यारोपं प्रपंच्य, 'ऐतदात्म्यमिदं सर्वं' इत्युपसंहृतम्। इदमुपक्रमोपसंहारात्मकं प्रथमं लिंगम्। प्रकारांतरेण नवकृत्वस्तत्त्वमसीत्युपदेशो द्वितीयमभ्यासाख्यम्। प्रत्यक्षादिप्रमाणांतरागोचरस्य शाब्देनैवाखंडविषयार्थं अपूर्वताख्यं तृतीयम्। 'तस्य तावदेव चिर'मिति विवेकिनः प्रारब्धभोगान्ते विदेहकैवल्यं फलं चतुर्थम्। यथा सौम्यैकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिदृष्टांतैर्निर्णय उपपत्त्याख्यं षष्ठम्। सप्तार्थवादाः पंचममर्थवादाख्यम्। अर्थवादास्तु सर्वस्य तेजोऽबन्नादिप्रपंचस्यात्मन एवोत्पत्तिरेकः। तस्मिन्नेवावस्थानं द्वितीयः। पुनस्तत्रैव लयस्तृतीयः। एभिस्त्रिभिः कारणब्रह्ममात्रतावगमः। अनेन जीवेनात्मनानुप्रविश्येति जीवरूपेणानुप्रवेशश्चतुर्थः। यः पृथिव्यां तिष्ठन्नित्यंतर्यामितया भेदात्पंचमः। यदग्ने रोहितं रूपमिति पदार्थशोधनं षष्ठः। अमृतः समभवदित्यभेदज्ञानस्य स्वात्मैक्यममृतं फलं सप्तमः। इति ह्यर्थवादाः। प्रपंचितं चैतद्दत्तपुराणे पंचविशेऽध्याये, वृद्धशिक्षायामपि 'जातं यतो जगदिदं'मिति श्लोकत्रयेण। नन्वस्य ब्राह्मणस्य षड्लिंगबलत्त्वेनानन्यशेषत्वे विधिनिषेधात्मकवेदभागात्पृथग्भूतमेतत्प्रकरणांतरं स्यादित्याशंक्य निखिलवेदस्यात्रैव तात्पर्याद्विधिनिषेधानामेतच्छेषत्वम्। अस्य च सर्वशेषित्वात्प्राधान्यमित्याह- अन्यानिति।।४५।।

**आपादयत्येव बुद्धिशुद्धिद्वारा स्वशेषताम्।**

**तस्यान्यशेषत्वाभावान्नार्थवादत्वमीरितम्।।४६।।**

एतदात्मप्रतिपादकवाक्यजातं सर्वानप्यन्यान् विधीन्, उपलक्षणमेतन्निषेधानामपि। बुद्धिशुद्धिद्वारा स्वशेषतामापादयति। न ह्येतद्वाक्यविहितं ब्रह्मात्मैक्यं विज्ञाय कर्तव्यमवशिष्यते, यतो जिज्ञासोत्पत्तावेवास्य निवृत्तिर्दृष्टा। संन्यस्य श्रवणं कुर्यात्, नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति, निरीक्ष्य लोकान् कर्मचितान् ब्राह्मणो

निर्वेदमायान्नास्त्यकृतः कृतेनेत्यादौ; प्रागेव हि जिज्ञासोत्पत्तेः कर्म विधीयते; चित्तस्य शुद्धये कर्म नतु.., विविदिषन्ति यज्ञेनेत्यादौ। ततो निर्विद्य संन्यस्य प्रवृत्तिं प्रेयसीमपि इति वृद्धशिक्षायाम्। अतश्चित्तशुद्धिपर्यंतमेव कर्मानुष्ठानं, ततो रागद्वेषाद्यपगमेन साधनचतुष्टयसंपत्तौ जिज्ञासोत्पत्तिः। ततो गुर्वनुग्रहेण श्रवणादिना ज्ञानं, मनननिदिध्यासनाभ्यां तत्स्थिरीकरणं, तेन सर्वदुःखनिवृत्तिर्निरंकुशतृप्तिः कृतकृत्यता च। अत एव विधिनिषेधानां शेषत्वं ज्ञानस्य शेषित्वम्। ननु विधिनिषेधाभाववतो वाक्यस्य प्रवृत्तिनिवृत्त्यनुपयुक्तत्वादर्थवादत्वं जैमिनीया मन्यन्ते। सत्यम्। स्यादन्यशेषत्वेऽर्थवादत्वं, तदभावो हि लिंगषट्केन कृत्यशेषत्वाभावेन च प्रदर्शितः। अत एवैतस्य स्वप्राधान्येनानन्यशेषत्वान्नार्थवादत्वमित्याह- तस्येति।।४६।।

**अबाधिताविज्ञातार्थज्ञापकं ह्येतदेव हि।**
**बलिष्ठत्वात्सदितरैः प्रमाणैर्न विहन्यते।।४७।।**

ननु सिद्धार्थज्ञापने प्रयोजनाभावात् कार्यपरो हि वेदः इति प्रवृत्तिनिवृत्तिजनकत्वेन तस्य प्रामाण्यं, तच्च सिद्धार्थज्ञापनपरत्वे आनर्थक्येनानुवादत्वेन च विहन्येतेत्याशंक्याह- अबाधितेति। अज्ञातज्ञापकत्वं तावत्प्रामाण्यलक्षणं, न प्रवृत्तिनिवृत्तिजनकत्वम्। अविज्ञातं च ब्रह्मात्मैक्यं तत्त्वमस्यादिवाक्यैः प्रतिपाद्यते। तच्चात्र प्रमाणांतरेणाबाधितमस्ति वेदोपनिषत्सु। न हि तदुक्तोऽर्थो बाध्यमानो दृष्टः प्रमाणांतरेण। ब्रह्मात्मज्ञानस्य प्रमाणांतराप्राप्तत्वादेव च नानुवादत्वम्। अखिलसंसारनिवृत्तिफलस्य च दृष्टत्वान्नात्मज्ञानस्यानर्थक्यमपि, ज्ञानिनः कृत्यशेषत्वाभावान्न विधिनिषेधशेषत्वं च। बलवच्चैतद्वाक्यजातं, बलं चोपक्रमादिषड्लिंगेति। प्रणेतुरीश्वरस्य भ्रमप्रमादादिदोषराहित्यात्सर्वाप्तत्वाच्च सत् निर्दोषम्। अत एव दूषितैरनुमानादिभिरसत्प्रमाणैर्न विहन्तुं शक्यते। तदेतत्प्रपंचितं पुरुषार्थाधिकरणे।।४७।।

**अत्राधिकारिभेदेन क्रममुक्त्या उपासनम्।**
**प्रोक्तं त्रिधाङ्गावबद्धप्रतीकाहंग्रहाभिधम्।।४८।।**

एवं विध्यर्थवादविलक्षणब्राह्मणस्याबाधितं स्वार्थप्रामाण्यमनन्यशेषत्वं च प्रतिपाद्य तत्प्रतिपादितमुपासनं सफलमाह-अत्रेति। अत्र अस्मिन् ब्राह्मणेऽधिकारभेदेन सकामस्य सगुणोपासनं निष्कामस्य निर्गुणोपासनमिति द्विविधमुपासनमुक्तं मुक्तिफलकम्। साच मुक्तिर्द्विविधा सद्योमुक्तिः क्रममुक्तिश्चेति। क्षयित्वसातिशयत्वादिदोष- दर्शनेनाब्रह्मलोकात्सकलविषयविरक्तस्य निष्कामस्य पुंसः सद्योमुक्त्यर्थं आत्मज्ञानजनकं निर्गुणोपासनं,

रागिणो मुमुक्षोर्दिव्यभोगावाप्तिद्वारा वैराग्योत्पादनक्रमेण ज्ञानजनकं क्रममुक्तिफलकं सगुणोपासनं; तच्च त्रिविधं; कर्मांगावबद्धोपासनं, प्रतीकोपासनं, अहंग्रहोपासनं चेति। प्रतीकोपासनमेव तटस्थोपासनमुच्यते।।४८।।

**सद्योमुक्त्यै तुरीयं तु जिज्ञासाख्यं समीरितम्।**
**निर्गुणोपासनं तत्तु वक्ष्ये शिक्षान्तरेऽग्रतः।।४९।।**

द्वितीयं निर्गुणोपासनमाह-सद्योमुक्त्या इति। उक्तसगुणापेक्षयाऽस्य तुरीयत्वम्। एषां हि शुद्धब्रह्मजिज्ञासा। तदेतच्छिक्षांतरे वृद्धशिक्षायां, अग्रतः कालांतरे वक्ष्ये, विषयांतरात्।।४९।।

**उद्गीथादिपदार्थेषु कर्माङ्गेषु जडेषु च।**
**ब्रह्मादिदृष्टिरङ्गावबद्धोपासनमुच्यते।।५०।।**

अधुना तूक्तसगुणोपासने प्रथमं कर्मांगावबद्धोपासनमाह- उद्गीथादीति। कर्मांगभूतोद्गीथादिपदार्थेषु प्राणादिभावनया यदुपासनं तदंगावबद्धोपासनमुच्यते। यथा 'ॐ इत्येतदक्षरमुद्गीथमुपासीत' इत्यत्रोद्गीथावयवोंकारे प्राणदृष्टिः। 'पृथिवी हिंकारोऽग्निः प्रस्तावोंतरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधन'मित्यत्र हिंकारादि पंचविधे साम्नि पृथिव्यादिलोकदृष्टिः। उक्थ्याख्यशस्त्रे पृथिवीदृष्टिः। इष्टकाचिताग्नौ लोकदृष्टिरित्यादि ।।५०।।

**जडेषु कर्मानङ्गेषूक्ता नाममनआदिषु।**
**या ब्रह्मदृष्टिर्विज्ञेयं प्रतीकोपासनं तु तत्।।५१।।**

अथ प्रतीकोपासनमाह- जडेष्विति। नाममनआदिषु जडेषु वस्तुषु कर्मानंगभूतेषु या ब्रह्मदृष्टिरुक्ता तत्तु प्रतीकोपासनं विज्ञेयम्। 'स यो नाम ब्रह्मेत्युपास्ते' 'मनो ब्रह्मेत्युपासीते'ति च श्रुतिः। एवं 'स य एतमेवं वायुं दिशां वत्सं वेदे'त्यादि।।५१।।

**अहंग्रहाख्यं दहरवैश्वानरमुखं स्मृतम्।**
**वैश्वानरोऽहं दहराकाशोऽहमिति तत्र च।।५२।।**
**उदितं जीवसगुणब्रह्मध्यानमभेदतः।**
**महाप्रयासतः साध्यं सगुणब्रह्मलब्धये।।५३।।**

अहंग्रहोपासनमाह- अहमिति। दहरवैश्वानरप्रभृत्युपासनमहंग्रहाख्यं स्मृतम्। तथा च श्रुतिः 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतराकाश' इति

प्रस्तुत्य 'एष आत्मापहतपाप्मा' इति। तथा 'यस्त्वेवमेतं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति। एवं 'तद्योऽहं सोऽसौ योऽसौ सोऽहं त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' इत्यादिषु उपास्योपासकयोरभेददृष्टिरुक्ता। वैश्वानरोऽहं दहरोऽहं इत्येवमभेदः, अभेदेन जीवसगुणब्रह्मैक्यध्यानं तत्राहंग्रहोपासने उदितम्। तदुपासनं सगुणब्रह्मसाक्षात्कारसिद्ध्यर्थं महाप्रयासतो बलवत्तरप्रयत्नेन साध्यम्। यतस्तादृशसाक्षात्कारमंतरेणातिसूक्ष्मनिर्गुणब्रह्मसाक्षात्कारसंभवो नास्ति। चित्तशुद्ध्य-भावेनानैकाग्र्यात्।।५३।।५३।।

**अग्निहोत्रादि यत्कर्म चोदितं कर्मकाण्डतः।**
**कर्तव्यात्राप्यर्पणादावुद्गीथादौ च कर्मणि।।५४।।**
**ब्रह्मदृक्प्रोक्तमङ्गावबद्धोदासनमेव तत्।**
**ग्राह्यं गुणोपसंहारन्यायाच्छाखान्तरादपि।।५५।।**

एवं त्रिविधोपासनमुक्त्वा तत्रेतिकर्तव्यतां संक्षेपेण दर्शयति- अग्निहोत्रादीति द्वाभ्याम्। कर्मकांडे पूर्वोक्तविधिरूपब्राह्मणे 'अग्निहोत्रं जुहुयात्' 'संध्यामुपासीत' इत्यादिविधिभिर्यच्चोदितं विहितमग्निहोत्रादि कर्म, अत्र अस्मिन्नपि कर्मणि अर्पणादौ आदिना क्रियाग्नियजमानादिषु ब्रह्मदृष्टि कर्तव्या। ब्रह्म अर्पणं, सर्वं ब्रह्मेत्युपासितव्यमित्यर्थः। एवमुद्गीथादौ कर्मणि प्रवृत्ते तदवयवोंकारादौ ब्रह्मदृष्टिः कर्तव्या। इयं चोद्गीथाद्युपासना अंगावबद्धोपासनैव। अवयवोपासनविधानात्। तच्चोपासनं गुणोपसंहारन्यायेन शाखांतरादपि ग्राह्यम्। यथा अग्निहोत्रं नैकशाखासु पृथक्पृथगभिहितं गुणाश्च तत्र तत्र भिन्ना उपदिष्टास्तथापि विधिशेषाणामग्निहोत्रधर्माणां, तदेवैकमग्निहोत्रकर्म सर्वत्रोपदिष्टमित्यर्थाभेदादुपसंहार एवमिहापि उपासनैक्याच्छाखांतरीयगुणोपसंहारः कर्तव्यः, न्यायसाम्यात्।।५४।।५५।।

**प्रतिबंधकपापं तन्निवार्याप्रतिबन्धतः।**
**उत्क्रान्त्यनन्तरं स्वर्गप्रदमाशु तदर्थिनाम्।।५६।।**

एवं अंगावबद्धोपासनमुक्त्वा तत्फलमाह- प्रतिबंधकेति। तदर्थिनां स्वर्गकामानां नराणां यत्स्वर्गप्राप्तिप्रतिबंधकं पातकं तन्निवार्य प्राणोत्क्रमणोत्तरं अप्रतिबंधेन स्वर्गं प्रददाति। आशु- जन्मांतराविलंबेन, यदि स्वर्गकामः स्यात्।।५६।।

**प्रदानवदपापानां प्रददात्यधिकं फलम्।**
**नैतदादरणीयं तदध्रुवत्वान्मुमुक्षुणा।।५७।।**

निष्पापानां तु स्वर्गादप्यधिकं ब्रह्मलोकादि फलं ददाति। ननूपासनैक्ये फलभेदः कथमित्यत्रोदाहरणमाह- प्रदानवदिति। यथा देवतैक्येऽपि विशेषणभेदेन प्रदानभेदस्तद्वत्। पूर्वतंत्रे हि 'इंद्राय राज्ञे पुरोडाशमेकादशकपालं इंद्रायाधिराजेन्द्राय स्वराजे' इत्यस्यां त्रिपुरोडाशिन्यामिष्टौ 'सर्वेषामभिगमयन्नवद्यत्यच्छंबट्कार'मिति वचनात् इंद्राभेदाच्च सहप्रदानमाशंक्य, राजाधिराजस्वराजगुणभेदेन याज्यानुवाक्याव्यत्यासविधानाच्च देवतापार्थक्यात्प्रदानभेदः सिद्धांतितः। एवमत्रापि उपासनैक्येऽपि अधिकारिविशेषणभेदात्फलभेद इति। एवमुपासनाफलमुक्त्वा तस्य निःसारतामाह- नेति। अकामेन मुमुक्षुणा एतत्फलं नादरणीयं नेष्टव्यम्। कुतः, स्वर्गादिफलस्याध्रुवत्वादनित्यत्वात्; यतः स्वर्गोऽपि कल्पांते विनश्यति।।५७।।

**तत्तु प्रमाणबलतो धीशुद्धिद्वारतोऽचिरात्।**
**इहैव मोक्षसिद्ध्यर्थं कर्तव्यं परमादरात्।।५८।।**

ननु फलानादरे साधनेऽप्यनादरः स्यादित्याशंक्य नेत्याह- तदिति। तत्-कर्मांगोपासनं तु परमादरेण कर्तव्यम्। किमर्थम्? इहैवाचिरान्मोक्षसिद्धयर्थं जीवन्मुक्तिसिद्ध्यर्थम्। यद्वाऽस्मिन्नेव जन्मनि मोक्षप्राप्त्यर्थम्। ननु कथं स्वर्गादिभोगफलानामुपासनानां मोक्षफलकत्वम्? उच्यते। चित्तचांचल्यकारकरागद्वेषादिधीदोषनिरासे चित्तशुद्धिः; साचोपासनेन। ततश्चित्तस्य ब्रह्मविचारसामर्थ्यम्। ततो ज्ञानान्मोक्ष इति धीशुद्धिद्वारा तासां मोक्षफलकत्वम्। नन्वनुक्तमपि कथं श्रद्धेयं कर्मांगोपासनानां मोक्षफलकत्वमिति चेदुच्यते। प्रमाणबलत इति। प्रामाण्यं तावद्वेदस्य निरपवादम्। 'सर्वे वेदा यत्पदमामनन्ति' इति सर्वेषां वेदानां ब्रह्मणि तात्पर्यमवधारितम्। 'विविदिषंति यज्ञेन दानेन तपसानाशकेन' इति च श्रुतिर्यज्ञादीनां विविदिषासाधनं बोधयति। स्मृतिश्च 'सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः। यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्' इति।।५८।।

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणाहुतम्०।**
**इति वाक्यबलाद्ब्रह्माप्तिस्तद्दृष्ट्येह नापरा।।५९।।**

तदेवाह ब्रह्मार्पणमिति। अर्पणहविर्यजमानादिकर्मकारकेषु ब्रह्मदृष्ट्याऽवलोकयता ब्रह्मैव गन्तव्यं विदुषा। एवकारेण सूचिता गन्तव्यान्तरव्यावृतिर्नापरेति मुखतोऽभिहिता।

सिद्धमेवमकामस्योद्गीथादिकर्मसु ब्रह्मदृष्ट्या ब्रह्माप्तिरेव फलं नान्यत्स्वर्गादीति।।५९।।

**प्रतीकोपासनेनापि निष्कामस्येह शुद्धितः।**
**मुक्तिर्वा महराद्याप्तिरप्रतीकेति सूत्रतः।।६०।।**

प्रतीकोपासनफलमाह- प्रतीकेति। निष्कामस्य प्रतीकोपासनेनापि इहास्मिन्जन्मनि चित्तशुद्धिद्वारा मुक्तिः। पूर्वोक्तन्यायेन सकामस्य तु महरादिलोकप्राप्तिः। तदुक्तं बादरायेण 'अप्रतीकालंबनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च' इति सूत्रे।।६०।।

**गुणभेदश्रुतेः शाखाभेदेनैक्यं विधीयते।**
**सजातीयोपासनस्य नानाशाखागतस्य तु।।६१।।**

गुणोपसंहारविवक्षयाऽऽह- गुणेति। नानाशाखागतस्य पंचाग्निप्राणदहरशांडिल्य वैश्वानरादिसजातीयोपासनस्य शाखाभेदेन गुणभेदश्रुतेर्भिन्नविशेषणश्रवणात् उपासनाभेदमाशंक्य, संयोगरूपचोदनाख्यानामविशेषात् ऐक्यं विधीयते सर्ववेदांतप्रत्ययाधिकरणे बादरायणेन। संयोगः फलं, रूपं स्वरूपं, चोदना विधायकशब्दः, आख्या अभिधानम्।।६१।।

**एकत्वाद्ब्रह्मलोकाप्तिफलस्यातो विशेषतः।**
**ग्राह्या गुणोपसंहाराद्गुर्वनुग्रहतो गुणाः।।६२।।**

ब्रह्मलोकप्राप्तिरूपफलस्य चैकत्वादुपासनैक्यम्। फलग्रहणममुपलक्षणं रूपचोदनाख्यानाम्। अतः शाखाभेदेन गुणभेदेऽपि विद्यैक्यात् गुणोपसंहारन्यायेन शाखांतरगतगुणाः ग्राह्याः, ते च गुर्वनुग्रहेणैव ग्राह्याः। अनधीतनैकशाखागतानां गुणानां गुरुमंतरेण दुर्विज्ञेयत्वात्। स चोपसंहारः सजातीयगुणानामेव कर्तव्यो न विजातीयगुणानाम्। यथा वाजिनां छंदोगानां च प्राणविद्यायां श्रैष्ठ्यगुणान्वितस्य प्राणस्य वसिष्ठात्वादयो गुणाः। कौषीतकीप्रभृतीनां तु श्रैष्ठ्यमेव, तथापि विद्यैक्याद्वसिष्ठत्वादिगुणोपसंहारः सजातीयत्वात्तेषामपि। तथैव वाजिनां छंदोगानां चोद्गीथविद्यायां नामसादृश्येऽपि उपक्रमादिभेदाद्विद्याभेदोऽध्यवसितः। वाजिनामक्ष्यादित्यादिगतहिरण्यश्मश्रुतादिगुणविशिष्टब्रह्मपुरुषोपासनम्। छंदोगानां तु परोवरीयस्त्वगुणविशिष्टमित्यतो विजातीयत्वाच्छाखाभेदेऽपि नोपसंहारः, इत्यादिप्रपंचः अन्यथात्वाधिकरणे सर्वाभेदाधिकरणे च द्रष्टव्यः।।६२।।

**श्रद्धयैवं मानसाग्निचयनादेरिहाऽऽमृतेः।**

**उक्तवद्ध्यायतो नित्यं ब्रह्मलोकगतिः क्रमात्।।६३।।**

एवं- उक्तप्रकारेण श्रद्धया इह जन्मनि आमृतेः - शरीरपातावधि, मानसाग्निचयनादेर्नित्यं प्रत्यहं ध्यायत उपासकस्य, क्रमात्- 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' इत्युक्तक्रमेण ब्रह्मलोकगतिर्भवति।।६३।।

**भूमवैश्वानरादीनां मध्यादेकतमाऽऽमृति।**

**ग्राह्योपास्तिस्तु काम्यानां यथाकामं समुच्चयः।।६४।।**

ननु श्रुत्युक्ताः सर्वा अप्युपासनाः कर्तव्या अथवा काश्चिदेवेत्याशंक्य तत्र व्यवस्थामाह। या हि भूनवैश्वानराद्याः उपासनाः केवलमीश्वरप्राप्तिफलास्तासां विकल्प एव। 'ईशसाक्षात्कृतेस्त्वेकविद्ययैव प्रसिद्धितः। अन्यानर्थक्यविक्षेपौ विकल्पस्य नियामकौ' अस्यार्थः- एकेनैवोपासनेनेशसाक्षात्कारसिद्धेरन्योपासनवैय्यर्थ्यम्। पुनस्तेन चित्तविक्षेपश्च तस्माद्विकल्पनियमः इति। ततस्तादृशोपासनमध्यादेकतमोपास्तिरादेहपातात्स्वीकर्तव्या न द्वित्रादयः। काम्यानां तु यथाकामं समुच्चयः कर्तव्यः। 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति'। 'स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति' इत्याद्यास्तटस्थोपासनाः काम्याः। ताश्चादृष्टद्वारा कर्मवत् फलसाधनं न साक्षात्कारेण। अतस्ता यथाकामं समुच्चीयेरन्न वा समुच्चीयेरन्, नियमहेत्वभावात्।।६४।।

**देहं कालवशात्त्यक्त्वा ध्येयाकार उपासकः।**

**मुक्त्वा पुण्येतरेऽतीत्य विरजानामिकां नदीम्।।६५।।**

**यात्यमानवनीतोऽसौ पुनरावृत्तिवर्जितः।**

**अहंग्रहोपासकस्तु ब्रह्मलोकं स्वलङ्कृतः।।६६।।**

अथाहंग्रहोपासनफलमाह- देहमित्यादिनवभिः। तत्र मनोमयः प्राणशरीरः कं ब्रह्म खं ब्रह्म सत्यकामः सत्यसंकल्प इत्याद्या 'देवो भूत्वा देवानप्येती'त्यादिश्रुतेरीश्वरप्राप्तिफलाः अहंग्रहोपासनाः। तासामनुष्ठानेन सगुणब्रह्मतां गतोऽसावुपासकः कालवशादिमं देहं त्यक्त्वा पुण्यपापे विधूय देवयानेन पथा गच्छन् विरजानामिकां नदीमतीत्य पर्यंकविद्याप्रकारेण सुतरामलंकृतः पुनरावृत्तिवर्जितं ब्रह्मलोकं गच्छति। तत्र चैनं अमानवः पुरुषो नयति। अत्र छांदोग्यश्रुतौ 'अर्चिषोह'रित्याद्युपक्रम्य 'चंद्रमसो विद्युतं

तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इत्युक्त्वोपसंहृतम् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इति।।६५।।६६।।

**यत्रापराजितपुरं हिरण्मयगृहाणि च।**
**अश्वत्थः सोमसवनः सर ऐरंमदीयकम्।।६७।।**

उक्तं ब्रह्मलोकं वर्णयति- यत्रेति। अत्रार्थे श्रुतिः 'ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयँसरः तदश्वत्थः सोमसवनः तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मय'मिति। इरंमेघो मेघज्योतिः।।६७।।

**अनन्याधिपतिस्तत्र सङ्कल्पादेव कामितान्।**
**विषयान् स्थूलदेहेन कदाचित्सूक्ष्मदेहतः।।६८।।**

स चोपासकस्तस्मिंल्लोके न अन्याधिपतिर्यस्यैतादृशो भवति। यं यं कामं संकल्पयते तं तं संकल्पमात्रादेव प्राप्नोति। कामितान् भोगान् स्थूलदेहेनाथवा सूक्ष्मदेहेन मनोमात्रेण वा भुंक्ते यदृच्छया युगपदेव बहूनपि योगेश्वरवत्। उक्तं च बादरायणेन- 'संकल्पादेव तु तच्छ्रुतेः' 'अत एव चानन्याधिपति'रिति च।।६८।।

**एकधानेकधा वाऽपि भूत्वाऽप्रतिहतौजसा।**
**हिरण्यगर्भवद्भोगान् भुञ्जानः सोऽवतिष्ठते।।६९।।**

स च स्वेनाप्रतिहतौजसा हिरण्यगर्भवत् दिव्यान् भोगान् भुञ्जानः क्वचिदेकधा भवति क्वचिद्बहुधा भवति स्वेच्छया योगेश्वरवत्। तदुक्तं प्रदीपाधिकरणे 'स एकधा भवति त्रिधा भवति पंचधा सप्तधा नवधे'त्यादिश्रुतिः। एवं विविधैः शरीरैर्बहून् भोगान् युदपदेव भुञ्जानोऽवतिष्ठते।।६९।।

**सर्वानन्दास्पदब्रह्मलोकानन्दभुगेव सः।**
**महाकल्पे ब्रह्मलोके प्रणष्टे ब्रह्मणा सह।।७०।।**
**पुनरावृत्तिरहितो ब्रह्मभूयाय कल्पते।**
**अविभागेन स ब्रह्मभावं यास्यत्युपासनात्।।७१।।**

न च सोऽस्मादिवदेवाशाश्वतविषयानंदभोक्तेति मन्तव्यम्। यतः स सर्वेषां मानुषादिहिरण्यगर्भान्तानामानंदानामास्पदभूतब्रह्मानंदभुगेव। 'एतस्यैव मात्रामुपजीवन्ती'ति च श्रुतिः। एवमाकल्पं सगुणब्रह्मसाक्षात्कारजन्यमानंदं भुक्त्वा महाप्रलये प्रणष्टेऽपि ब्रह्मलोके, नास्यानंदविरहः। यतस्तदा स ब्रह्मणा हिरण्यगर्भेण सह परमं पदं गतः

पुनरावृत्तिरहितः सन् ब्रह्मभूयाय कल्पते। तदुक्तं- 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पद'मिति। एवं योऽहंग्रहोपासकः स यथोक्तोपासनात् अविभागेन ब्रह्मभावं यास्यति। तदेतदविभागाधिकरणे व्युत्पादितं, 'अहं ब्रह्मास्मि न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्ये'दित्यादिश्रुतिषु उपासकब्रह्मणोरविभागस्य दृष्टत्वादविभागेनाखंडैकरसयाऽस्य ब्रह्मत्वमिति।।७०।।७१।।

**एवं ह्यहंग्रहोपास्तिफलं परमदुर्लभम्।**
**महानुग्रहतो यत्नात्साधनीयं मनीषिणा।।७२।।**

हि यस्मादेवंविधं अहंग्रहोपास्तिफलं यत्नांतरशतेनाप्यत्यंतदुर्लभं, तस्मान्महतां सज्ञनानां तत्त्वदर्शिनामनुग्रहेण तामवाप्य, यत्नातिशयेन चानुष्ठाय मनीषिणा बुद्धिमता पुरुषेण तदेव फलं साधयितव्यम्। यतः स एव परमः पुरुषार्थो जीवानामवाप्तमानुषशरीराणाम्।।७२।।

**यथोस्योपासकस्येयं गती रश्म्यनुसारिणः।**
**सुषुम्णया सदान्येषां सा तु स्वप्नेऽपि दुर्लभा।।७३।।**

फलस्यास्य दुर्लभत्वमाह- यथेति। उत्क्रामतो ह्युपासकस्य रश्म्यनुसारित्वमुक्तं रश्म्यधिकरणे। तथाच श्रुतिः 'अमुष्मादादित्यात्प्रतायन्ते त आसु नाडीषु सृप्ता आभ्यो नाडीभ्यो प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' इत्यादिना नाडीरश्मिसंबंधमुक्त्वा, 'अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत' इति तस्य रश्म्यनुसारित्वं प्रतिपाद्य पुनः सुषुम्णामधिकृत्योक्तं 'तयोर्ध्वमायन्नमृतत्वमेति' इति। एतत्सर्वमभिप्रेत्योक्तं तश्म्यनुसारणोऽस्योपासकस्य येयं सुषुम्णामार्गेण ब्रह्मलोकगतिः सा त्वन्येषां उपासकानां स्वप्नेऽपि सुदुर्लभतरेति। सदेति वचनमुपासनानित्यत्वाभिप्रायम्।।७३।।

**आदित्यादिमण्डलाप्तिप्रदमध्वादिविद्यया।**
**तत्तल्लोकफलाप्त्यन्ते परत्र गतिरुच्यते।।७४।।**

अधुना तीव्रवैराग्याभावे पारलौकिकभोगप्राप्तिफलानां काम्योपासनानामपि कर्तव्यतामभिप्रेत्य तासां फलमाह- आदित्यादीति। 'असौ वा आदित्यो देवमधु' इत्यादिश्रुत्युक्ता मध्वादिविद्या आदित्यमंडलाप्त्यादिफलकाः। तासामुपासनेन तदुक्तलोकप्राप्तिरूपं फलं भुक्त्वा विशुद्धमतेरुपासकस्य परत्र गतिर्भवति प्रागुक्तब्रह्मलोके इति श्रुतावुच्यते तत्र तत्र।।७४।।

**एवं श्रौतोपासनानि मीमांसाद्वितयस्य च।**
**संमतानि तु वामाख्योपासनानि न सन्ति हि।।७५।।**

एवं- उक्तप्रकाराणि श्रुत्युक्तोपासनानि मीमांसाद्वितयस्य पूर्वोत्तरमीमांसयोः संमतानि कर्तव्यत्वेन; तस्मात्तानि कर्तव्यानि उक्तप्रकारेण शिष्टादृतत्वात्। वाममार्गोपासनानि तु पारिशेष्यादसंमतान्यागमोक्तानि हि यस्मात्तस्मात्तानि न सन्ति साधूनि न भवन्तीत्यर्थः।।७५।।

**मद्यभक्षादिवामाद्यागमस्य तु न मानता।**
**मीमांसाद्वितये सर्वशिष्टैश्च तदनादरात्।।७६।।**

'न सुरां पिबे'दित्यादिश्रुतिनिषिद्धसुरासेवनादिविधायकवाममार्गादीनां तु न धर्मे प्रामाण्यम्। पूर्वोत्तरतंत्रयोस्तेषामनादरात्। स्मृत्यादीनामपि स्वतंत्रप्रामाण्यबाधनेन वेदमूलकतयैव प्रामाण्यस्य साधितत्वात्। आगमादीनां तु वेदानधिकारिविषयत्वेन व्यवस्थापितत्वाच्च। व्यासमन्वादिभिः शिष्टैरपि तेषामनादृतत्वादप्रामाण्यम्।।७६।।

**मद्यादियुग्राजसार्चाधिकारो ब्राह्मणस्य न।**
**सुरामद्याशने देहान्तप्रायश्चित्तकीर्तनात्।।७७।।**
**स्पर्शे तदङ्गच्छेदोक्तेर्दोषानपगमोक्तितः।**
**कृच्छ्राद्यनुष्ठानतोऽपि पातित्यं शिष्टसंमतम्।।७८।।**

इतोऽपि वाममार्गाश्रयणं न कर्तव्यमित्याह- मद्येति। 'सुरामांसादिपूजेयं विप्रवर्ज्यं मयेरिते'त्यादिना मद्यादिसंयुक्तराजसपूजायां ब्राह्मणस्यानधिकारसंकीर्तनात् सद्यःपातित्यस्मरणाच्च। पैष्ट्यादित्रिविधा सुरा, तालादिजमेकादशप्रकारं मद्यं, तयोरन्यतराशने ब्राह्मणस्य देहान्तप्रायश्चिस्योक्तत्वाच्च। स्पर्शे तदंगछेदोक्तेश्च। कृतप्रायश्चित्तस्यापि दोषानपगमस्मरणाच्च। आशरीरपातात्पातित्यस्य शिष्टसंमतत्वाच्च। महापातकेषु परिगणनादपि तत्सेवनस्पर्शोपहारादिप्रयोजकं वामागमाश्रयणं न कर्तव्यमित्यर्थः।।७७।।७८।।

**रहोऽन्यथाचारिणोऽपि नवीना भास्करादयः।**
**ब्राह्मण्याद्दुर्विधेर्भ्रष्टोऽभवं माऽन्ये भवन्त्विति।।७९।।**

**सभायां भूतदयया प्रशंसंति स्म शिष्टवत्।**
**परिष्कुर्वन्ति स्म पूर्वग्रन्थानुसृतितः स्वयम्।।८०।।**

ननु वामागमस्य प्राचीनैरनादृतत्वेऽपि नवीनैर्भास्कररायप्रभृतिभिः शिष्टैः स आद्रियत इति चेदाद्रियतां नाम रहसि। न हि तावता स प्रामाण्यपदवीमारोहति। यतस्तैः स्वयमेव तस्याप्रामाण्यं प्रतिपाद्यते सदसि। ननु कथमन्यथाऽऽचारोऽन्यथा प्रतिपादनं शिष्टानामपि; उच्यते। यद्यपीन्द्रियलौल्याद्दैहिकसिद्ध्याशया वा रहसि स्वयं अन्यथाऽऽचरन्ति वामागमप्रतिपादितदेवतामुपास्य तदंगतया सुरासेवनादि कुर्वन्ति; तथापि जानन्ति दुर्दैववशाद्ब्राह्मण्याद्भ्रष्टमात्मानम्। न च तच्छक्यं पुनरवाप्तुमिति कृत्वा स्वयं तदेवाचरन्ति। परं त्वन्येऽपि मैवं स्वधर्माद्ब्राह्मण्याच्च भ्रश्यन्तु इति भूतदयया सभायां तथा प्रशंसन्ति प्रकर्षेण कथयन्ति, शिष्टवत् श्रुतिप्रामाण्यमप्रामाण्यं चागमादीनाम्। तथा प्राचीनग्रंथाननुसृत्यैव स्वयमपि परिष्कुर्वन्ति श्रौतोपासना; निन्दन्ति च वाममार्गान्। न चैते शिष्टाः अत एवोक्तं शिष्टवदिति।।७९।।८०।।

**स धर्मबुद्ध्यान्धपरम्परया तमसागतः।**
**धर्माभासस्तिरस्कार्य उभयभ्रंशकृद्यतः।।८१।।**

सोऽयं तांत्रिकः पंथास्तमोऽज्ञानं तेन हेतुना स्वीकृतः, अधर्मेऽपि धर्मबुद्ध्या केनचित्तामसश्रद्धावता। ततश्चायमंधपरंपरया प्रवृत्तः। एवंप्रकारेण पारंपर्यागतोऽपि वाममार्गस्तिरस्कार्यस्त्याज्यः। यतोऽयं धर्माभासः। 'धर्माभासोऽन्यधर्मश्च विधर्म उपमा छलः। पंचशाखा ह्यधर्मस्ये'ति तस्याधर्मत्वेन हेयत्वात्। अत एवास्योभयोः स्वर्गापवर्गयोरिहपरलोकयोर्वा नाशकृत्त्वम्।।८१।।

**मीमांसद्वय्यनुक्तापि पुराणस्मृतिसंमता।**
**शिष्टादृतेशप्रतिमोपासनोभयसिद्धिदा।।८२।।**

नन्वागमोक्तस्य वाममार्गस्य मीमांसानादृतत्वेन हेयत्वे प्रतिमापूजनस्यापि हेयत्वं तदनुक्तत्वादित्याशंक्य, वेदाविरुद्धपुराणस्मृत्यादिसंमतत्वाद्व्यासादिशिष्टैरादृतत्वाच्च न हेयत्वं उभयसिद्धिदत्वादित्याह-मीमांसेति।।८२।।

**यतो विशेषान्मन्दानां तपःपूजातिशायनात्।**
**बिम्बाभिरूप्यात्सान्निध्यममूर्तोऽपीश ऋच्छति।।८३।।**

यतः स्वल्पबुद्धीनां विशेषतः प्रतिमापूजैव विहिता, यस्मात् सिद्धिदा च

तस्मादवश्यं कर्तव्या। न त्वमूर्तस्येशस्य कथं प्रतिमा, कथं वा प्रतिमायां तस्य सान्निध्यमिति शंकनीयम्। यस्मान्निराकारोऽपीशोऽर्चकस्य तपोबलात्पूजातिशयात्प्रतिमा-सौंदर्याच्च प्रतिमास्वपि सान्निध्यं करोत्येव। तदुक्तं- 'अर्चकस्य तपोयोगादर्चनस्यातिशायनात्। आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति' इति।।८३।।

**ततो वशीकृते चित्ते सगुणब्रह्मशीलनात्।**
**निरुपाधिकमेवाविर्भवेद्ब्रह्मेऽनुग्रहात्।।८४।।**

यत एवं तस्मात्तादृशप्रतिमात्मकसगुणब्रह्मोपासनेन चित्ते स्वायत्तीकृते सति ईश्वरानुग्रहेण निरुपाधिकं निर्गुणं सच्चिदानंदात्मकं ब्रह्म स्वयमेव मनस्याविर्भवेदित्याह- तत इति।।८४।।

**मन्देनापि विरागेण जन्ममृत्युभयादव।**
**मामीशेति प्रपन्नानामर्चकानां स मोक्षदः।।८५।।**

हे ईश ! मां जन्ममृतुयभयात्संसारादवेति मंदेनापि वैराग्येण युक्तानां मोक्षं ददाति स कृपालुः परमेश्वरः। किं पुनस्तीव्रवैराग्याणाम्। अत एव प्रागुक्तं 'यतो विशेषान्मंदाना'मिति। 'न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिद' इत्यस्याप्येतदेव तात्पर्यम्।।८५।।

**नेशस्य प्रतिमाच्यैवं नवीनाः केऽपि निर्दयाः।**
**प्रजल्पन्ति श्वभसितसोदरीभूतमेव तत्।।८६।।**

एवं स्थितेऽपि केचिदाधुनिका विवेकिनंमन्याः विद्वांसो नेशप्रतिमा पूज्या इत्येवं वृथा जल्पन्ति। ते नूनं मंदानामधःपातेन स्वीयं निर्दयत्वमेव प्रकटयन्ति। न ह्यनेन कोऽपि लाभस्तेषाम्। तस्माच्छुनो भषितमिव मत्वा परित्याज्यं तत् श्रद्धालुभिर्निःश्रेयसकामैरित्याह- नेशस्येति।।८६।।

**प्राग्देवताधिकरणन्यायावष्टम्भतस्त्विदम्।**
**उक्तं पुनरुपन्यासो नेह तस्य प्रतन्यते।।८७।।**

देवताधिकरणन्यायस्तावत्प्रागेव भूतार्थवादप्रामाण्यचिंतायां (कुमारशिक्षायां च) दर्शितः। इदं प्रतिमोपासनं तु तन्न्यायाश्रयेणैवोक्तमस्माभिः पूर्वाचार्यैश्च। इह पुनरपि तस्योपन्यासो विस्तरेण न क्रियते अप्रयोजनत्वादित्याह- प्रागिति। देवताधिकरणे तावद्देवताया विग्रहवत्त्वे वैदिकशब्दे प्रामाण्यविरोधमाशंक्य, 'नातः प्रभवादिति' परिहृत्य

विग्रहाभावोऽपि निरस्तः। तेन देवतानां विग्रहवत्त्वे सिद्धे तत्प्रतिमापूजापि निष्प्रत्यूहा सिद्ध्यतीति भावः।।८७।।

**सगुणेशार्चया रामदासाद्या अधुनातनाः।**
**अत एवाभवञ्शाब्दपरब्रह्मपरायणाः।।८८।।**

उक्तविषयेऽनुभवमपि प्रमाणयति- सगुणेति। रामचंद्रमूर्त्यादिसगुणेश्वरो-पासनेनाधुनिका रामदासाद्याः साधवोऽत्रैव सिद्धाः। अत एव अस्मादेव मूर्त्युपासनादनन्यसहकृतात् शाब्दे परे च ब्रह्मणि निष्णाता अभवन्निति हि विदिततरं सर्वेषामाबालवृद्धानां भारतीयानाम्। ततोऽपि नादर्तव्यः प्रतिमापूजानिषेध इति।।८८।।

**कृष्णापञ्चनदीयोगेऽभ्यर्च्य श्रीदत्तपादुके।**
**भक्त्या नारायणस्वामी जीवन्मुक्तोऽधुनाऽभवत्।।८९।।**

उक्तमर्थं द्रढयितुं श्रीमन्नारायणस्वामिनामाख्यायिकामाह- कृष्णेत्यादिद्वादश-श्लोकैः। संप्रति रामदासादिभ्योऽप्यर्वाचीन काले नारायणस्वामी एतन्नामा कश्चिद्विप्रवरः कृष्णापंचगंगासंगमे नृसिंहवाटिकायां भक्तिपुरःसरं श्रीदत्तपादुकार्चनमात्रेण जीवन्मुक्तो बभूव।।८९।।

**पुत्र्यावादाय विधुरः कारनाटकदेशतः।**
**नृसिंहवाटिकाक्षेत्रमेत्यार्चनपरोऽभवत्।।९०।।**

सोऽयं नारायणस्वामी पूर्वाश्रमे कारनाटकदेशे न्यवसत्। तत्र तस्य द्वे तनये अभवताम्। ततोऽस्य कलत्रं पंचत्वमगात्। ततोऽसौ निर्विण्णः संसारात् जन्मदेशं विहाय कुमार्यौ गृहीत्वा नृसिंहवाटिकाक्षेत्रमागत्य श्रीदत्तोपासनतत्परो बभूव।।९०।।

**कर्तुं स्वदासस्य वचो गरिष्ठः शेषस्य सत्यं प्रणिधानतुष्टः।**
**ईशः प्रसन्नोऽभवदल्पबुद्धिप्रार्थ्यस्ततोऽस्यास समाधिसिद्धिः।।**

तस्य प्रणिधानेनाविरतचिंतनेन संतुष्टो गरिष्ठः पूर्वेषामपि गुरुः स परमेश्वरः स्वदासस्य शेषावतारस्य पतंजलेः 'ईश्वरप्रणिधानाद्वा समाधि'रिति वचः सत्यं विधातुं प्रसन्नोऽभूत्। यतः स स्वल्पबुद्धिभिरपि प्रार्थ्यः प्रार्थनया वशीकर्तुं शक्यः। प्रसन्ने च तस्मिंस्तदनुग्रहेणास्यानायासत एव समाधिसिद्धिर्बभूव।।९१।।

**अप्रत्तपुत्र्यौ निशि पाययित्वा स्वयं यवागूमथ शाययित्वा।**
**समाहितस्ते अथ मेहनाय बुद्धे प्रभुः प्राप तदाऽवनाय।।९२।।**

एवं वर्तमानः स कदाचिन्निशायां अविवाहिते स्वकीये कन्ये यवागूं श्राणां पाययित्वा, शय्यायां शाययित्वा स्वयमुपविष्टो भगवच्चिंतनसमाहितमना विस्मृताखिलप्रपञ्चः स्वस्थो बभूव। अथाचिरेण कालेन ते कन्ये शकृत्पीडिते प्रबुद्धे बभूवतुस्तदा प्रभुः श्रीदत्तः कन्ययोरभयदानेन नारायणस्वामिनः समाधिभंगेन अवनाय परिपालनाय प्राप आविरास।।९२।।

**नारायणोऽपि स्वयमेष भूत्वा नारायणोऽन्यस्तनये गृहीत्वा।**
**स्वयंप्रदीपोऽपि धृतप्रदीपो नात्वा बहिस्ते जनधीप्रदीपः।।९३।।**

स्वयमेष नारायणोऽपि अन्यो नारायणो- नारायणस्वामिसन्निभो भूत्वा निःशेषजनधीप्रकाशकत्वात् स्वयंप्रकाशोऽपि प्रकाशार्थं धृतप्रदीपः सन् ते तनये गृहीत्वा बहिर्नीत्वाऽमेहयत्।।९३।।

**कृतोत्सृती ते विमले विधाय निधाय वेश्माप्यररं पिधाय।**
**नारायणो व्युत्थित एति यावन्नारायणोऽद्वैत इवास तावत्।।९४।**

ते कृतोत्सृती कृतविष्ठोत्सर्गे प्रक्षालनादिना निर्मले विधाय पुनरपि निधाय वेश्म-वेश्मनि, शय्यायामिति शेषः। अररं कपाटं पिधाय। यावन्नारायणस्वामी समाधितो व्युत्थितो वेश्म शयनागारमागच्छति तावच्छ्रीनारायणोऽपि अद्वैत इव अद्वितीयवत् बभूव। द्वितीयं नारायणरूपं तिरश्चकारेत्यर्थः।।९४।।

**ज्ञात्वाथ तद्गर्ह्यमुभे स्वजाते दत्वा द्विजाभ्यां विधिनैव जाते।**
**तस्मिन् विरक्ते प्रददौ च तस्मै स प्रैषदण्डाद्यपरोऽपरस्मै।।९५।**

ततः कन्यामुखात्तत्सकलं विज्ञाय, भगवतः सकाशात् परिचर्यास्वीकरणं गर्ह्यमिति मत्वा अचिरणैवोभेऽपि स्वजाते तनये विवाहविधिना 'विभागः शतव'दिति न्यायेन एकैका एकैकस्मिन इति द्वाभ्यां द्विजाभ्यां दत्वा स्वयं विरक्तो बभूव। अथैतस्मिन् ताव्रवैराग्यसंपन्नतया संन्यासाधिकारिणि सति अपरः न विद्यते परो यस्मात्स पुरुषोत्तमः अपरस्मै दासत्वेन स्वस्मिन् द्वितीयत्वं भावयते नारायणस्वामिने तस्मै प्रैषदण्डादि स्वयमेव प्रददौ रहसि।।९५।।

**यशस्यमीशेन कृतं रहस्यमेतत्त्वविद्वान् मठपः प्रहस्य।**
**मनस्यतीवार्त इवाप्रशस्यं भ्रष्टोऽयमित्याह स तद्रहस्यम्।। ९६।**

**नारायणोक्तिश्रवणात् प्रबोधपारायणं वेद स तं प्रबोधम्।**
**नारायणात् प्राप स शिष्यभावपरायणः प्राप परात्मभावम्।।९७।**

एतदीशेन कृतं रहस्यं गुप्तं दण्डादिप्रदानं नारायणस्वामिनो यशस्करं कर्म अविद्वान् मठपतिः मनस्यतीव पीडित इव भूत्वा प्रहस्य अयं भ्रष्टोऽतीवाप्रशस्यं कर्मानेन कृतं गुरुमंतरेण दण्डग्रहणमित्याह। ततः स नारायणास्वामी तत्तत्त्वं नारायणोक्तिश्रवणात् स्फुटीभवष्यति, नारायणः स्वयमेवैतत् कथयिष्यतीत्यर्थः। तदुक्तिश्रवणमेव प्रबोधपारायणं पूर्णज्ञानसाधनं नान्यदित्युक्तवान्। अथ कालेन स मठाधिपतिरपि तं प्रबोधं तत्त्वज्ञानं साक्षान्नारायणाच्छ्रीदत्तात्रेयात्प्राप। ततोऽनुतप्तः स स्वयमेव नारायणस्वामिशिष्यत्वपरायणो भूत्वा तत्सेवया कालेन परमात्मभावं प्राप। अथवा स अविद्वान् मठाधिपः बहिष्ठनत्यवसरे अंतःस्थितनारायणयतिकृतनारायणोक्तिश्रवणात् साश्चर्यः तं नारायणस्वामिनं प्रबोधपारायणं- सर्वज्ञं वेद ज्ञातवान्। प्रहसनापराधी सः अनुतप्तः तं शरणं गतः शिष्यभावपरायणो भूत्वा तस्मान्नारायणात् यतेः प्रबोधं आत्मज्ञानं प्राप लब्धवान् परात्मभावं मोक्षं च प्रापेति।।९६।।९७।।

**इतीट्प्रसादादपरोक्षसाक्षात्कारो बभूवापि परोऽपि साक्षात्।**
**न्यासं स्वतोऽकारयदप्यपूर्वं यस्याधुनाप्यर्चनमस्ति पूर्वम्।।९८।।**

उपसंहरति इतीति। एवमीश्वरप्रसादादपरोक्षसाक्षात्कारोऽप्यस्याभवत्। परमात्मा स्वयं परोऽपि त्रिगुणातीतोऽपि प्रतिमोपासनाकृष्टचेताः साक्षात्सगुणो भूत्वा स्वोपासकेन नारायणस्वामिना संन्यामकारयत् स्वयमेव। अदृष्टपूर्वमेतत्। अधुनाऽपि यस्य स्वामिनो दत्तार्चनात्पूर्वमर्चनं भवति श्रीदत्तानुग्रहतः। दृश्यते चैतत्तत्र गच्छता जनेन सांप्रतमपि।।९८।।

**शालिवाहनशके भसप्तभूसंमिते स मधुमास्यमातिथौ।**
**संस्थितोऽभवददृश्यरूपतः स्वार्चकस्य स च दृश्यरूपतः।।९९।**

नारायणस्वामी अधुनैव भसप्तभू(१७२७) संमिते सप्तविंशत्यधिकसप्तदशशतमिते शालिवाहनशके, मधुमासि चैत्रे, अमावास्यायां तिथौ संस्थितौ ब्रह्मभावं गतो अदृश्यशरीरोऽभवत्। न तु मृतः, यतः संप्रत्यपि स्वोपाकसस्य भक्तस्य साक्षात्प्रत्ययादिना वा दृश्यरूप एवावतिष्ठते।।९९।।

**आरब्धे त्वमुना नृसिंहभजने सिंहोऽग्रतः प्राप्तवान्।**
**योऽन्तःस्थोऽपि बहिष्ठनत्यवसरे नारायणेत्युक्तवान्।।**
**व्याघ्रस्याधिमपाहरद्द्विजवरं यो वैद्यनाथे मृतम्।**
**चक्रे सासुमसौ ददातु भजतां नारायणो नोऽमृतम्।।१००।।**

अस्य माहात्म्यं संक्षेपतो दर्शयति- आरब्ध इति। यदा यदाऽयं भक्तच्युद्रेकेण श्रीमन्नृसिंहनामसंकीर्तनानंदसँलीनचेतास्तद्भजनगर्जनामारभते तदा तदा स हरिः नृसिंहरूपेणाग्रतो दृश्यते स्म समीपवर्तिभिर्जनैः शृण्वन्निव हर्षेण। तथा स्वयमयं गर्भगृहगतोऽपि यदि कश्चिन्मार्गस्थो बहिर्देशादेवात्मानं नमस्करोति चेत्तदानीमेव पश्यन्निव 'नारायणे'त्याशिषं प्रयच्छति स्म तस्मै। कदाचित् कश्चिद्व्याघ्रः कंटकविद्धचरणस्तीव्रवेदनया व्याकुलीकृतहृदयश्चलितुमशक्नुवन् पथि पपात मुमुर्षुरिव। तं जीवच्छरीरं विज्ञाय तेन पथा गच्छन्तो जनाः साध्वसेन न्यवर्तन्त। तच्छ्रुत्वा केचित्तं मार्गान्निष्कासयितुं केचन च हन्तुं प्रावर्तन्त। श्रीमन्नारायणस्वामी सर्वमेतद्विदित्वा केषांचित्प्रार्थनया तत्र गत्वा न्यवीवृततद्धन्तुकामान् 'मैनं घ्नते'ति। स्वयं च तत्सन्निधं गत्वा तं सम्यगालोच्य तदंघ्रेः कंटकं निष्कास्य समाश्वास्य करस्पर्शेन विगतव्यथं यथासुखं गम्यतामित्युवाच। शार्दूलोऽपि पश्यतो जनस्य विपिनं जगाहे। इत्येवं प्रसिद्धाऽऽख्यायिका सूचिता 'व्याघ्रस्याधिमपाहर'दिति। वैद्यनाथे एतन्नामकग्रामे मृतं कंचिद्द्विजवरं तद्बंधुजनप्रार्थनया यः सासुं सप्राणं चक्रे। असौ श्रीनारायणस्वामी भजतां नोऽस्माकं अमृतं मोक्षं ददात्विति मंगलाशंसा।।१००।।

इत्येषा वासुदेवेन युवशिक्षाप्रकाशिका। निमित्तीकृत्य लिलिखे मामात्मशरणं स्वयम्।।१।। शके द्व्यब्धिधृतावाश्वयुजकृष्णरवौ रवौ। समर्पिता श्रीगुरवेऽनया स प्रीयतामिति।।२।। श्रीदत्त।। इति श्रीमदुपाध्येकुलजनुर्लक्ष्मणात्मजगोविंदशर्मकृता युवशिक्षाटीका समाप्ता।।

**एवं तूपासनानि श्रुतिमुखगदितान्यत्र संदर्शितानि**
**प्राज्यान्येषां यदिष्टं तदिह परमया श्रद्धया भक्तिमत्या।।**
**योऽङ्गीकृत्वाऽप्युपास्तेऽपि सति कलियुगे तारतम्यादुपास्ते**
**सोऽन्यत्रात्राथवेयाच्छ्रुतिमुखगदितां मुक्तिमीशप्रसादात्।।१०१।।**

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमद्वासुदेवानन्दसरस्वतीस्वामिविरचिता

## ।। युवशिक्षा समाप्ता।।